C. M Veerabhadra Sharma.

काव्यमाला ८६.

श्रीहरीहरविरचितं

# हरिहरसुभाषितम् ।





मूल्यं ८ आणकाः ।

०-११-०



KÂVYAMÂLÂ 86.

THE

# HARIHARASUBHÂSHITAM

OF

## HARIHARA.

EDITED BY

PAṆḌIT KEDÂRNÂTH

AND

WÂSUDEVA LAXMAṆA SHÂSTRÎ PAṆASHÎKAR.

Second Edition.



PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR "NIRṆAYA-SÂGAR" PRESS.

BOMBAY.

PRINTED BY B. R. GHÂNEKAR AT THE "NIRṆAYA-SÂGAR" PRESS,
FOR THE PUBLISHER.

1910.

*Price 8 Annas.*

काव्यमाला. ८६.

श्रीहरिहरविरचितं

# हरिहरसुभाषितम् ।

जयपुरनिवासिसाहित्योपाध्यायपण्डितकेदारनाथशर्मणा
पणशीकरोपाह्वलक्ष्मणतनुजनुषा वासुदेवशर्मणा
च संशोधितम् ।

( द्वितीयावृत्तिः । )

तच्च

मुंबय्यां

[illegible]

[illegible] तुकाराम जावजी [illegible]

[illegible]

इत्येतेषां कृते तेषामेव निर्णयसागराख्ययन्त्रालये बालकृष्ण
रामचंद्र घाणेकर इत्यनेन मुद्रयित्वा प्रकाशितम् ।

शाकः १८३१ खिस्ताब्दः १९१०



मूल्यं ८ आणकाः ।

# श्रीहरिहरसुभाषितस्य
## विषयानुक्रमः




| प्रकरणसंख्या. | | पृष्ठसंख्या. |
|---|---|---|
| १ | मङ्गलप्रकरणम् .... .... .... .... .... | १ |
| २ | बालविनयप्रकरणम् .... .... .... .... .... | ३ |
| ३ | सुहृदुपदेशप्रकरणम् .... .... .... .... .... | ८ |
| ४ | प्रवासप्रकरणम् .... .... .... .... .... | ११ |
| ५ | राजप्रशस्तिप्रकरणम् .... .... .... .... .... | १६ |
| ६ | राजोपासनप्रकरणम् .... .... .... .... .... | २१ |
| ७ | राजनीतिप्रकरणम् .... .... .... .... .... | २४ |
| ८ | समयवर्णनप्रकरणम् .... .... .... .... .... | २९ |
| ९ | शृङ्गारवर्णनप्रकरणम् .... .... .... .... .... | ३६ |
| १० | नायकनायिकाभेदप्रकरणम् .... .... .... .... | ४२ |
| ११ | प्रकीर्णकप्रकरणम् .... .... .... .... .... | ४९ |
| १२ | परमार्थप्रकरणम् .... .... .... .... .... | ५६ |


---

# काव्यमाला।

श्रीहरिहरविरचितं

## हरिहरसुभाषितम्।

पायाज्जाया पयोजातजन्मनो मन्मनो मुदम्।
शारदा पारदासारतुल्यधावल्यधारिणी ॥ १ ॥
गोविन्दाख्यानपीयूषप्लवैरिव सितीकृताम्।
व्यासादिवदनाम्भोजभ्रमरीं भारतीं भजे ॥ २ ॥
गौरीगिरीशयोरेकमङ्कालंकारकारणम्।
मदवारिझरोद्गारमयं वस्तु वयं स्तुमः ॥ ३ ॥
गण्डकण्डूयनोत्खातमेरुमूलान्तशायिनम्।
पायाद्गणेशितुः शेषं विसमित्यामृशन्करः ॥ ४ ॥
स्तुमस्ते लोचने विष्णोर्विना याभ्यां जगन्त्यपि।
अन्धीयन्त्यप्रतीकारं चारुलोचनवन्त्यपि ॥ ५ ॥
सामुद्रेषु सुजन्मानमेकं श्रीकौस्तुभं स्तुमः।
नारायणोरःस्थेनापि येनालंक्रियतेऽम्बुधिः ॥ ६ ॥
नीलिमानमहं वन्दे तं देवस्य मुरद्विषः।
तदाप्लवादिव प्राप्तं यमुना यं न मुञ्चति ॥ ७ ॥
प्रीयतां श्रीर्यया विश्वं वशीकृत्य लघूकृतम्।
किमन्यद्विश्वधृग्वक्षःकस्तूरीमकरीकृतः ॥ ८ ॥
स पायात्पार्वतीपाणिः फणिकङ्कणिना धृतः।
सात्त्विकेषु विकारेषु त्रासो यत्रास निह्नवः ॥ ९ ॥
शिवायाः शवतापन्नमपि यन्न जहौ हरः।
वपुस्तन्नौमि येनान्तःस्फोटः कैटभजित्कृतः ॥ १० ॥

कलां तामैन्दवीं वन्दे यया यादःपतिः पिता ।
आरुह्य हरमूर्धानं कृतस्त्रैलोक्यमूर्धनि ॥ ११ ॥
जगत्पतिपदस्पर्शजातामर्षेव जाह्नवी ।
जयत्यम्बुकणैर्जन्तूञ्जनयन्ती जगत्पतीन् ॥ १२ ॥
विसृजन्त्याः पुरा यस्या ब्रह्माण्डाण्डानि वारिधौ ।
सूतिखेदारवो वेदास्तां मात्सीमूर्तिमाश्रये ॥ १३ ॥
तं स्तुमः कमठं यस्मिन्नास्ते सगिरिसागरा ।
मन्थाचलकिणक्रोडमग्ना मृदिव मेदिनी ॥ १४ ॥
स क्रोडः क्रीडतां दन्तक्रान्तकल्पाब्धिपल्वलः ।
यद्दन्तलग्नजम्बालक्षोदालम्बा जगत्त्रयी ॥ १५ ॥
विदारयन्हरिः पातु हिरण्यकशिपोरुरः ।
तदन्तर्गतमात्मीयं द्वेषमन्वेषयन्निव ॥ १६ ॥
नमाम वामनं धाम त्रिभिस्त्रिभुवनं पदैः ।
वामनीकृत्य कथिता येनात्मनि तदात्मता ॥ १७ ॥
स्तुमस्तमुद्यमे यस्य त्रासात्त्रिःसप्तधा व्यधात् ।
क्षत्रियक्षतजाम्भोधावन्तर्धानं वसुंधरा ॥ १८ ॥
स पातु यः प्रतापाग्निपाकपिण्डीकृताम्भसम् ।
सेतुना पुनरुक्तेन ततार क्षारवारिधिम् ॥ १९ ॥
तं नौमि यमुना यस्य लाङ्गलाग्रापवर्तिता ।
उपास्य पादावभजद्गङ्गासंगमयोग्यताम् ॥ २० ॥
बुद्धमुद्बुद्धकारुण्यरसावासमुपास्महे ।
अहिंसा दीर्घसंसारदारिणी येन दर्शिता ॥ २१ ॥
निःशेषोन्मूलितम्लेच्छं करिष्यन्नवनीतलम् ।
करवालकरः कल्की भिनत्तु कलिकल्मषम् ॥ २२ ॥
मत्स्यादयो दशाप्यंशा यस्य कंसान्तकारिणः ।
तं कुक्षिकुहरक्षिप्तद्विसप्तभुवनं भजे ॥ २३ ॥

स्तनपं क्षणमङ्केन वोढुं म्लायन्ति मातरः ।
जयत्युर्वीयमक्लिष्टं पुष्णात्यामरणं जगत् ॥ २४ ॥
मृतानुगामि तन्नौमि शंभोरम्भोमयं वपुः ।
आत्मव्ययेन यज्जन्तोरन्तःशैत्याय जायते ॥ २५ ॥
विश्वजीवननिर्बन्धमहं गन्धवहं भजे ।
चेष्टतेऽधिष्ठितं येन सहजेन जडं जगत् ॥ २६ ॥
तद्व्योम व्योमकेशस्य वयं वन्दामहे वपुः ।
पूर्त्यै यदेकदेशस्य नालं ब्रह्माण्डकोटयः ॥ २७ ॥
नमश्चन्द्रमसे तस्मै यस्मै दृक्कोटिकैतवात् ।
अर्पयन्ति जगन्ति द्रागुन्निद्राम्बुरुहाञ्जलीन् ॥ २८
सौरी जयत्यसौ रीतिः शश्वद्विश्वविलक्षणा ।
यज्जगद्बोधनायास्य निरालम्बेऽम्बरे भ्रमिः ॥ २९ ॥
स्ववासिनां हविर्भागवहनं दहनं स्तुमः ।
दहन्तमपि यं नित्यमुपजीवन्ति जन्तवः ॥ ३० ॥
होत्रा नस्त्राणकृद्भूयाद्वपुषा स वृषाकपिः ।
जज्ञे यज्ञेन रूपेण यत्कृते प्रकृतेः परः ॥ ३१ ॥
इलाजलानलव्योमसोमसूर्याग्निमूर्तिभिः ।
अस्मान्विस्मारयत्वेकः कष्टमीशोऽष्टमूर्तिभिः ॥ ३२ ॥

इति श्रीहरिहरसुभाषिते मङ्गलप्रकरणम् ॥ १ ॥

---

अन्तःप्रकाशमिच्छन्तः सदसच्च विवेचितुम् ।
स्नेहं सूक्तिप्रदीपेऽस्मिन्वर्धयन्तु सुबुद्धयः ॥ १ ॥
उच्चैःस्थितीनां विदुषां पदमारोढुमिच्छवः ।
मत्सुभाषितसोपानसेविनः सन्तु साधवः ॥ २ ॥
समाजेभ्यः सुमनसां सुभाषितमयं मधु ।
यावज्जीवं विचिन्वन्ति साधवो मधुपा इव ॥ ३ ॥

लक्ष्मैर्बन्धकितं बध्वा भारवीयं सुभाषितम् ।
प्रक्रान्तपुत्रहत्याधं निशि माघं न्यवारयत् ॥ ४ ॥
सुभाषितमधून्येव जनो यद्यवमन्यते ।
रसनामात्मनः केन रसेनोपकरिष्यति ॥ ५ ॥
सुभाषितामृतास्वादसुखसंमुखचेतसः ।
संभावयन्ति पीयूषमप्यूषरजलायितम् ॥ ६ ॥
सुभाषितगुणेनैव मुनेर्वल्मीकजन्मनः ।
नद्धमद्यापि नापैति रामायणमयं यशः ॥ ७ ॥
भारताख्यं सरो भाति व्यासवागमृतैर्वृतम् ।
यत्र क्षत्रकुलाब्जेषु हंसीयति हरेर्यशः ॥ ८ ॥
न कस्यानुमतः काव्ये गुणो हनुमतः कवेः ।
यद्रसोऽन्तश्चिरं मग्नैरुपलैरपि धार्यते ॥ ९ ॥
प्रसादोत्कर्षमधुराः कालिदासीर्वयं स्तुमः ।
पीतवाग्देवतास्तन्यरसोद्गारायिता गिरः ॥ १० ॥
दण्डीत्युपस्थिते सद्यः कवीनां कम्पतां मनः ।
प्रविष्टे त्वान्तरं वाणे कण्ठे वागेव रुध्यते ॥ ११ ॥
भ्राम्यन्तु मारवग्रामे विमूढा रसमीप्सवः ।
अमरूद्देश एवासौ सर्वतः सुलभो रसः ॥ १२ ॥
जडानामपि चैतन्यं भवभूतेरभूद्गिरा ।
ग्रावाप्यरोदीत्पार्वत्या हसतः स्म स्तनावपि ॥ १३ ॥
नैतच्चित्रमहं मन्ये माघमासाद्य यन्मुहुः ।
प्रौढतातिप्रसिद्धापि भारवेरवसीदति ॥ १४ ॥
गाश्चारयंश्चिरादासीत्कामं गोवर्धनः क्षितौ ।
सोऽप्यर्थवान्बभूवाहो शालिवाहोपजीवनात् ॥ १५ ॥
रसैर्निरन्तरं कण्ठे गिरा श्लेषैकलग्नया ।
सुबन्धुर्विदधे दृष्ट्वा करे बदरवज्जगत् ॥ १६ ॥

आकर्ण्य जयदेवस्य गोविन्दानन्दिनीर्गिरः ।
बालिशाः कालिदासाय स्पृहयन्तु वयं न तु ॥ १७ ॥

संपूरयन्तु धामैव धावकस्य धनैर्गिरः ।
गिरे मुरारेर्दारिद्यस्पृशेऽपि स्पृहयामहे ॥ १८ ॥

अर्थार्थिनां प्रिया एव श्रीहर्षोदीरिता गिरः ।
सारस्वते तु सौभाग्ये प्रसिद्धा तद्विरुद्धता ॥ १९ ॥

नवीनामनवीनां वा कवीनां लुम्पतां स्मृतिम् ।
नैव शंकरमिश्रेण शंकराचार्यविस्मृतिः ॥ २० ॥

सन्तु शास्त्रविदः श्रेष्ठाः प्रतिष्ठा कापि काव्यतः ।
ख्यातिः किं कालिदासस्य कृता टीकाकृताप्यधः ॥ २१ ॥

हृद्याः सन्तु शतं विद्याः काव्यादव्याहतं यशः ।
निपीतदर्शनग्रामे देहि रामेश्वरे दृशम् ॥ २२ ॥

सत्काव्यं राज्यमित्याहुः कवयो न मयोच्यते ।
तृप्यत्यर्थं कविर्ध्यायन्नैवं राजा तु जात्वपि ॥ २३ ॥

तत्पिबन्त्वमृतं देवाः काव्यमेवामृतं भुवि ।
यत्संबन्धेन जीवन्ति भोजराजादयो मृताः ॥ २४ ॥

के नायुध्यन्न कः प्रादान्नृपोऽनादावनेहसि ।
अनाराध्य कविं कस्य चिरं क्रीडन्ति कीर्तयः ॥ २५ ॥

वशीकरणमेकं हि जगतो यदि पृच्छसि ।
सुभाषितानि सम्यञ्चि संचिन्वानः समभ्यस ॥ २६ ॥

चमत्करोति केषांचित्सुकृतेन सुभाषितम् ।
दुर्लभं पुनरेतस्य वैलक्षण्यपरीक्षणम् ॥ २७ ॥

सुकृतेन कुले जन्म सुकृतेन सुभाषितम् ।
सुकृतेन सती भार्या सुकृतेन कृती सुतः ॥ २८ ॥

कुलशीलश्रुताचारवतां किल सतां कुले ।
चिरादाराध्य जायन्ते पुरुषाः पुरुषोत्तमम् ॥ २९ ॥

तपत्युपरि संसारदुःखसंभारभास्वति ।
पूर्वपुण्यतरुच्छाया साध्वी जाया सुजन्मनः ॥ ३० ॥
ग्रामस्याधिर्गृहव्याधिः कटुवाणी कुटुम्बिनी ।
हृत्कुठारः कुलाङ्गारः सुतः साधुपथच्युतः ॥ ३१ ॥
विना शीलेन वनिता वाग्मिता विद्यया विना ।
विनियोगैर्विना वित्तं मास्तु कस्यापि जीविनः ॥ ३२ ॥
सत्कुलं भूषणं पुंसः सद्भार्या कुलभूषणम् ।
सत्पुत्रभूषणा भार्या पुत्राः सन्मतिभूषणाः ॥ ३३ ॥
पुन्नाम्नो नरकादेव पुत्रा न त्राणकारिणः ।
विस्मारयन्ति स्त्रीणां च नरकक्लेशमप्यमी ॥ ३४ ॥
शिशोः क्रीडनकैर्वेश्म कलालापैरपि श्रुतिः ।
वपुरङ्गरजोभिश्चेन्नाकुलं जगदाकुलम् ॥ ३५ ॥
बालैः परिहृतं वेश्म न श्मशानाद्विशिष्यते ।
यत्रस्था देहिनो नित्यं दह्यन्ते गतचेतसः ॥ ३६ ॥
न चन्द्रश्चन्द्रमाः पुत्रं चन्द्रमाहुर्मनीषिणः ।
दृष्टे स्पृष्टे श्रुते चोक्ते घ्राते यत्रेन्द्रियोत्सवः ॥ ३७ ॥
जातमात्रेण पुत्रेण कः प्रमोदो मनीषिणाम् ।
यदि नाम न विद्यादिगुणैः सार्धं स वर्धते ॥ ३८ ॥
अनिच्छन्तोऽपि विनयं विद्याभ्यासेन बालकाः ।
भेषजेनेव नैरुज्यं प्रापणीयाः प्रयत्नतः ॥ ३९ ॥
शनैः शनैर्विनीयन्ते तर्जनैस्तोषणैरपि ।
नवा इवाश्वाः कुशलैर्बालाश्चपलचेतसः ॥ ४० ॥
लालयेद्बालकं तावद्यावदत्र विमुग्धता ।
राजा प्रजास्विव प्रीतिं पश्चात्प्रच्छादयेत्पिता ॥ ४१ ॥
वरं वन्ध्यत्ववादोऽपि योषित्पुरुषयोस्तयोः ।
याभ्यां लालनलुब्धाभ्यां न विनीतः स्वयं सुतः ॥ ४२ ॥

वपूंषि जनयन्त्येव जन्तून्यूकादिकानपि ।
तेषु द्वेषवतः प्रीतिरविनीते सुते कुतः ॥ ४३ ॥

अप्यनेकैरुपचितैर्दुर्विनीतैः सुतैरलम् ।
निदर्शनं धार्तराष्ट्राः शतं दुर्योधनादयः ॥ ४४ ॥

एकेनापि विनीतेन सुतेनोद्ध्रियते कुलम् ।
गङ्गावतारणापारप्रथं पश्य भगीरथम् ॥ ४५ ॥

नीचैरेव परं सर्पत्पयोऽप्युच्चैर्नयेन्नरः ।
विरलास्तरलाक्षाणां बालानां शिक्षणे क्षमाः ॥ ४६ ॥

पुरा हि पतितः प्राह प्रवाहे निष्प्रतिक्रियः ।
बालान्नाध्यापयिष्यामो विपत्स्यामो वयं वरम् ॥ ४७ ॥

शिशोर्दुःशिक्षणीयत्वात्सोपेक्षो न क्षणं भवेत् ।
विपुलाय फलायालं कष्टकृष्टा वसुंधरा ॥ ४८ ॥

व्याहारेण विहारेण सदसत्संगमेन च ।
पुरः पुत्रं परीक्षेत चिरभाविनि पौरुषे ॥ ४९ ॥

यः पुरो मधुरोदारस्तेन भारः पितुर्धृतः ।
सान्द्रस्निग्धो नदन्धीरं नीरं क्षरति वारिदः ॥ ५० ॥

शिशौ प्रविशतः प्रायः प्रतिवेशिगुणागुणौ ।
गन्धोऽन्यसंनिधेरेव संक्रामति समीरणे ॥ ५१ ॥

कदाचित्साधुतामेति पुरः शिशुरसन्मतिः ।
प्राक्पाण्डुपुत्राः कुत्रापि चीयन्ते चारुभूरुहाः ॥ ५२ ॥

किमध्ययनहीनेन सुतेनातिसुबुद्धिना ।
तीक्ष्णेन करवालेन किं भीरुकरवर्तिना ॥ ५३ ॥

यावन्न यौवनप्राप्तः शिक्ष्यते तावदात्मजः ।
व्यतीतकाले केदारे कर्षणैः किं करिष्यते ॥ ५४ ॥

विनयन्तु सुतान्सन्तः स्वसंपाद्याः पुनर्गुणाः ।
सर्वे कृषाणाः कुर्वन्तु बीजं सूतेऽङ्कुरं स्वतः ॥ ५५ ॥

स्वयमेव संमीहन्ते गुणान्भव्याय भाविनः ।
प्रगुणाय प्ररोहाय करीराः केन शिक्षिताः ॥ ५६ ॥

इति श्रीहरिहरसुभाषिते बालविनयप्रकरणम् ॥ २ ॥

---

सुचिरं सुखयति पुरुषं निपुणमधीतं वयःक्रमे प्रथमे ।
संतुष्यति कृषिकारः सत्समये साधुकृष्टकेदारः ॥ १ ॥
नाधीतं कैशोरे किमुपकरिष्यत्यनन्तरे वयसि ।
अङ्कुरनिहितकुठारः कतरो हि तरोः फलं लभते ॥ २ ॥
कुरु गुरुवचो निपीतं भूयो भूयो विचिन्तयाधीतम् ।
विद्या गुरूपदिष्टा चिरपरिमृष्टा विभूषणं विदुषः ॥ ३ ॥
यद्यप्यसि जडचेतास्तदपि न रे तात हेयमध्ययनम् ।
जङ्घाल एव शैलं न लङ्घते किं तु केऽपि गच्छन्तः ॥ ४ ॥
आत्मोपकारचतुरा नरा न गणयन्ति गुरुगृहक्लेशम् ।
वेधव्यथैव कियती श्रवसो ह्यवतंसभूषणीयस्य ॥ ५ ॥
क्व लघुः श्रियो विलासः क्व पुनर्विद्यारसोल्लासः ।
साक्ष्यं वदन्त्विदं च द्वितयेऽस्मिंस्तारतम्यसम्यञ्चः ॥ ६ ॥
उपदिशति लोकवृत्तं वितरति वित्तं विनोदयति चित्तम् ।
उत्तम्भयति महत्त्वं विद्या हृद्या सुराजसेवेव ॥ ७ ॥
वरमेकैव निसृष्टा विद्येति ब्रूयुरल्पसंतुष्टाः ।
परिमितगुणपरितुष्टा न जात्वभीष्टोन्मुखाः पुरुषाः ॥ ८ ॥
एकामधीत्य विद्यां बिभेति बहुविद्यपरिषदं प्राप्तः ।
क्वासन्नशस्त्रनिकरः कुत्रैकशरः पुनः पुरुषः ॥ ९ ॥
विद्या विनयोपेता हरति न चेतांसि कस्य मनुजस्य ।
मणिकाञ्चनसंयोगो जनयति लोकस्य लोचनानन्दम् ॥ १० ॥
अपि निपुणतरमधीतं दुर्विनयारूढचेतसः पुंसः ।
मणिरिव फणिफणवर्ती प्रभवति शोकाय लोकानाम् ॥ ११ ॥

विगुणा बहवोऽपि गुणा विना विनीतेन चेतसा पुंसः ।
निशितैरलं शरशतैरनुपेतपतञ्जिके धनुषि ॥ १२ ॥
भूषणमेव न कुरुते दूषणमप्यावृणोति विनयोऽयम् ।
भूषयति रुचिरमंशुकमङ्गान्यपि तानि किं न गोपयति ॥ १३ ॥
पुंसो विभूषणाय प्रसरत्येकोऽपि कोऽपि गुणः ।
वसुधावलयमलंकृतमनवरतगुणेन पुरुषरत्नेन ॥ १४ ॥
जननीजठरव्याधिर्बन्धूनामाधिरपगुणः पुरुषः ।
एतत्कृतो धरित्र्या भारो हरिणाप्यनपनेयः ॥ १५ ॥
यदि गुणमिच्छसि फलिनं कुलमकलङ्कं मनो निरातङ्कम् ।
अतिदूराद्गुरुदोषं परिवर्जय दुर्जनेषु परितोषम् ॥ १६ ॥
पिशुनप्रणयी पुरुषो यदि न विनश्यत्यवश्यमेति भयम् ।
यदि संनिहितं दहनो न दहति संतापयत्येव ॥ १७ ॥
परपरितापनकुतुकी गणयति नात्मीयमपि तापम् ।
परहतिहेतोः पिशुनः संदंश इव स्वपीडनं सहते ॥ १८ ॥
करलालितोऽपि दहति ज्वलति व्यजनेन वीज्यमानोऽपि ।
दहन इवानिर्वाणं न विमुञ्चत्युष्णतां पिशुनः ॥ १९ ॥
वक्रं विचरन्नहिरिव विहितजगत्प्राणचर्वणः पिशुनः ।
मुदितः क्वचिदुपलब्धे परकीयच्छिद्र एव निद्राति ॥ २० ॥
परिहृतमसाधुवाचा प्राचामाचारगोचरं वर्त्म ।
सज्जनसमाजसेवनमेव नरेभ्यो निवेदयति ॥ २१ ॥
मार्जितपरमालिन्यस्तप्तोऽपि मनागनन्तरं शिशिरः ।
जलमिव सुजनः स्नेहं विनिहितमभितः प्रसारयति ॥ २२ ॥
उपनीतनीतिनौकः संसारविकारवारिवन्यासु ।
सत्पुरुषकर्णधारस्तारयति बहूञ्जनानेकः ॥ २३ ॥
परहितहेतोर्विहिताः सुहृदः स्वहिताहितान्यजानन्तः ।
उपविन्यस्तपदानपि नौका इव तारयन्ति परान् ॥ २४ ॥

परिहृतपरापवादः परिमितवाक्परहितासक्तः ।
परिणतमतिपरिचर्यापरः पुरः सरति साधुचरितानाम् ॥ २५ ॥
प्राचां पथा प्रयत्नादाचर संचारमन्यतो मा गाः ।
तत्रापवादपङ्के निपतति तं के नयन्तु बहिः ॥ २६ ॥
यद्यधिरजनि शयानः सद्मनि सुखमीहते सुमतिः ।
योषामिव परपुरुषापवादपरुषां गिरं त्यजतु ॥ २७ ॥
........................................ ।
निपुणं निगूढमेतच्चेतसि निर्व्यूढमाकलयेः ॥ २८ ॥
स्थालीव खलस्तापादुद्वमति रसेन पिहित····मन्तः ।
अन्तः कोटरगुप्तैः सहैव शाखीव दह्यते सुजनः ॥ २९ ॥
इदमस्खलितं धारय वारय परुषाक्षरा वाचः ।
एकः सकलजनानां जगति रिपुः परुषवाक्पुरुषः ॥ ३० ॥
परभृन्मौखर्यभिया पोषकमप्यात्मघोषमुत्सृजति ।
अतिमुखर एष सहते मुहुरपि दण्डाहतिं पटहः ॥ ३१ ॥
परमुखरत्वज्वलितः करोषि मौखर्यमेषोऽपि ।
पुनरपि तदेव कर्ता कः परिहर्तानवस्थितिं युवयोः ॥ ३२ ॥
सुखमुखमिति यदि न त्वं परिहरसि परापवादपारुष्यम् ।
द्विगुणितहेतुः स कथं तवापवादान्निवारयतु वाचम् ॥ ३३ ॥
परिहर चापलमुच्चैः पदसंस्थितिसुस्थिरे मनसि ।
चिरमेधते न चपलश्चपलैव निदर्शनं तत्र ॥ ३४ ॥
पुण्यानि सततमर्जय परिवर्जय पौरुषेषु वैमुख्यम् ।
पौरुषपुण्यविहीनः पुरुषो लोकद्वये हीनः ॥ ३५ ॥
परिचर मातरपितरावाचर नितरामभीप्सितामनयोः ।
संस्मृत्य जननजीवनलालनपरिपालनप्रणयम् ॥ ३६ ॥
परवित्तविमुखमन्तः परदारनिरीक्षणाक्षमं चक्षुः ।
हरिपरिचितस्य पुंसः परदूषणदूरवासिनी रसना ॥ ३७ ॥

न्यायोपनीतवित्तः परस्वपरिवर्जनप्रयतचित्तः ।
जीवति सुजीवनं तज्जीवनमरणं तदितरस्य ॥ ३८ ॥
यद्युच्चैरपि न परानुपकुरुषे तन्मृषैव ते जन्म ।
यदि नैष जनितवर्षः को नाम पयोधरोत्कर्षः ॥ ३९ ॥

निरुपधिपरोपकारः कोऽप्युच्चैःस्थायिनां भारः ।
जगदमृतैरभिषिञ्चन्नञ्चति केनाभिसंधिना चन्द्रः ॥ ४० ॥
उपकाराय न जातः सपदि सुजातः कुजातवैरेऽपि ।
ग्रासयति ग्रस्तोऽपि द्रोहिणममृतानि रोहिणीरमणः ॥ ४१ ॥

आचारमाचर चिरादालस्यमपास्य जात्युचितम् ।
लोकानुरागसाधनमाराधनमेतदेव हरेः ॥ ४२ ॥
अलमथ वा बहुवादैर्विरचय लोकानुरागनिर्बन्धम् ।
तत्रैकत्र समग्रं तन्निहितं यन्न जातु संनिहितम् ॥ ४३ ॥
उन्मदतया कयाचित्कदाचिदपथप्रवृत्तमपि पुरुषम् ।
सद्यः सुहृदुपदेशः सृणिरिव करिणं निवर्तयति ॥ ४४ ॥
दुष्टाः सुहृदुपदिष्टा द्विष्टा इव रोषरुक्षतां दधते ।
भेषजकारिणि पुरुषे परुषाः पशवः प्रकुप्यन्ति ॥ ४५ ॥

इति श्रीहरिहरसुभाषिते सुहृदुपदेशप्रकरणम् ॥ ३ ॥

---

धनमेव धरणिवलये कलयति सफलायुषं पुरुषम् ।
यदि जीवति धनरहितः कथय मृतः कीदृशो भवति ॥ १ ॥
अकपर्दकस्य विफलं जनुरिति जानीमहे महेशोऽपि ।
शिरसि कृतेन कपर्दी भवति जटाजूटकेनापि ॥ २ ॥
नीचस्याप्युत्कर्षो धनस्य नाम्नापि जायते जगति ।
वदति वराटकयोग्यं जलाशयं यत्सरोवरं लोकः ॥ ३ ॥
को नाम नानुवृत्तिं सुमहानपि धनवतः कुरुते ।
वित्तेशभवनभित्तेः समीपमुपसेवते शंभुः ॥ ४ ॥

अपि नित्यानन्दमयं महः श्रियं वहति संततं हृदये ।
कः साधारणपुरुषः प्रभवत्वेनामनादर्तुम् ॥ ५ ॥
दौर्गत्यकलुषितानां दूषणतामेव गच्छति गुणोऽपि ।
बिभ्राणो गुणमभजद्विषधरवत्तां दिगम्बरो देवः ॥ ६ ॥
धनवानपि गुणवानप्यभिजनवानप्यपौरुषः पुरुषः ।
शृङ्गारितमिव चित्रं न भवति पात्रं दयादरयोः ॥ ७ ॥
पौरुषविमुखः पुरुषः परहितपरुषश्च पौरुषमयोऽपि ।
अपि कृतपरोपकारः स्वकृतश्लाघी च लाघवं भजते ॥ ८ ॥
शोभामुपैति पुरुषः स्वजातिसदृशेन पौरुषवशेन ।
न ब्राह्मणस्य बडिशं सदृशं न च धीवरेऽधीतम् ॥ ९ ॥
न क्षत्रिय इव योद्धा न वैश्यवत्कर्षणादिसंपन्नः ।
विप्रः प्राप्नोति परं चिरं यशः प्रार्थनकृतार्थः ॥ १० ॥
निवसन्निजेऽपि भवने प्रभवति भरणाय यदपि भृत्यानाम् ।
तदपि न गुणवान्पुरुषः प्रवासविमुखः परादरं लभते ॥ ११ ॥
शयनाशनादिविधुरो भवति विदेशेषु चङ्क्रमक्लेशः ।
निर्धनभवननिवासप्रयासखेदस्य षोडशो भागः ॥ १२ ॥
किं जीवति यच्छायामुपजीवति बन्धुवर्गस्य ।
तरुविटपप्रच्छन्ने प्रक्षिप तापक्षुपे नयनम् ॥ १३ ॥
परदेशे पर्यटतो यापनमपि जन्मनः श्रेयः ।
कृतमुपचितस्य बन्धोर्मुखावलोकात्सुधावगमैः ॥ १४ ॥
तावज्जीवति जन्तुर्यावद्भुङ्क्ते स्वयं समाहृत्य ।
पिण्डं परप्रयुक्तं प्राप्य प्रीणाति परिहृतप्राणः ॥ १५ ॥
न्यक्कारमुदरभरणे लब्ध्वा राहुर्जहावुदरमेव ।
उचितं केतुरहासीदमृतेऽपि कृतार्थनामुदनम् ॥ १६ ॥
इच्छति मानी मरणं न च गच्छति वैरिणः शरणम् ।
मानक्षरणं मरणं मानप्राणस्य केवलं कृतिनः ॥ १७ ॥

अपि जलकणान्पयोधेर्दूरादाहृत्य जायते जलदः ।
निकटाद्धटानपि शतं समाहरन्वारिहार्येव ॥ १८ ॥

तत्तद्देशाचारश्रुतवेषवचोविशेषवैदग्ध्यम् ।
विदुषामिदं विभूषारत्नमयत्नादुपैति परदेशे ॥ १९ ॥

भ्रमतामुदेति जगतो वैचित्र्यविलोकनेन विज्ञानम् ।
यादृच्छिकानि पुण्यान्यनेकतीर्थाभिषेकजनितानि ॥ २० ॥

कलिकलुषसंकटाकुलकुटुम्बसंवलनखेदविकलस्य ।
प्रतिनिधिरिव प्रवासः संसारविरागमुखमुदस्य ॥ २१ ॥

योषिदजनितापत्या नित्यापरिभूतवैरिणः क्षितिपाः ।
गुणिनो विदेशविमुखा न सुखाय भवन्ति बन्धूनाम् ॥ २२ ॥

नानानरपतिपरिषत्परिगणितगुणो जनो जगति ।
यज्जीवति तज्जीवितमितरत्किं तन्न जानीमः ॥ २३ ॥

यदपि प्रवासगमनं जीवितसंदेहदोलिकारोहः ।
तदपि तदेव श्रेयो जीवनमरणादनुद्यमहतस्य ॥ २४ ॥

प्रवसन्त्वनलसमनसः परानुरागोन्मुखाः पुरुषाः ।
अलमलसैर्जनविसरैश्चिरमपि परदेशदर्शिभिः पशुभिः ॥ २५ ॥

शीतातपवर्षाणामुत्कर्षान्संभवे समपहाय ।
प्रवसेदसंभवेऽपि प्रावृषि न प्रोषितो भूयात् ॥ २६ ॥

कः प्रेत इति प्रश्ने सदुत्तरे प्रान्तभक्षकं रक्षः ।
प्रादाद्धनमतिहर्षात्प्रेतं वर्षाध्वगं [व]दते ॥ २७ ॥

सद्वासरे सुलग्ने प्रमोदमाने च मङ्गलैर्मनसि ।
गरुडारूढस्य हरेः स्मरेत्प्रयातः पदाम्बुरुहम् ॥ २८ ॥

सति संभवे सहायैः प्रसरति बहुदेशदर्शिभिर्बहुभिः ।
ग्रामाद्ग्रामान्तरमपि जातु सचेताः प्रयाति नैकाकी ॥ २९ ॥

विपदं प्रतिपदसुलभां कः प्रतिकुर्याद्विना सहायेन ।
एकाकिनो जगदिदं जनमयमपि निर्जनारण्यम् ॥ ३० ॥

श्वेवायात्याहूतः शर इव संयात्यनुप्रहितः।
मन इव हितनिहितात्मा सुकृतशतैः सेवको भवति॥ ३१॥

शठमतिरलसप्रकृतिः प्राज्ञंमन्यश्च लोलुपश्चपलः।
अभिमानवान्निदेशाक्षेप्ता सप्तापि सेवका विपदः॥ ३२॥

यानाशनशयनासनवेशाद्युपयोगिवस्तुविस्तारैः।
सुखिनः प्रवसन्ति नराः प्रवसति कश्चित्कमण्डलुकरोऽपि॥ ३३॥

कौपीनवानपि गतः श्रिया वृतः सम्यगेति सत्पुरुषः।
श्रीमानपि प्रयातः कापुरुषः पुनरुपैति कौपीनी॥ ३४॥

सति संभवे शयानः सुविदितगन्तव्यवर्त्मसंस्थानः।
अनुचरजनहितकारी वन्याहारी भवेत्पथिकः॥ ३५॥

तत्तत्पथपथिकक्रमसमुचितसंचारवासविश्रामः।
पथि संचरेदवहितः परिचयरहितेषु येषु तेष्वेव॥ ३६॥

नापरिशीलितशीले सद्मन्यपि विश्वसन्ति विद्वांसः।
परदेशेषु कराले कलिकाले कस्य विश्वासः॥ ३७॥

शनकैः संतीर्णपथः पुरोपकण्ठे धरापतेर्धीरः।
विश्रम्य विदितवासप्रदेशमस्मिन्प्रवेशमाचरति॥ ३८॥

पुरतः पुरमपरिचितं न नीचवेशा विशन्ति विद्वांसः।
प्रथमेक्षितामवस्थां यस्मात्सर्वे स्मरन्ति सर्वस्य॥ ३९॥

नगरे नरेश्वरस्य प्रविश्य पुरतो विचीयते वसतिः।
आरामदेवमन्दिरवापीकूपादिरम्यविजनेषु॥ ४०॥

नाचरति दूरदर्शी परदेशी पौरविपरीतम्।
नापरिचितस्य सहते तनुतरमपि वैकृतं लोकः॥ ४१॥

पुरतः परनगरगतः परिचयमासाद्य साधुलोकेन।
निभृतेन भवति निपुणः सदसन्नृपभृत्यवृत्तविज्ञाने॥ ४२॥

सुविदितसकलविशेषः समुज्ज्वलैरनुचरैरनुचितवेषः।
अभिगत्य पश्यति पुरः पुरस्कृतं नरपतेर्धीरः॥ ४३॥

निजदेशकुलाख्यानामाख्यानादनुगुणान्विनयी ।
ज्ञापयति नृपतिदयितं सुभाषितैराहरन्हृदयमस्य ॥ ४४ ॥

सदवसरे सप्रणयः प्रागेव निवेदितः प्रभवे ।
नीतो नरपतिपरिषत्पुरस्कृतेनोपसर्पति नरेन्द्रम् ॥ ४५ ॥

गुणजातिसमयसदसामनुरूपेणोज्ज्वलेन वेशेन ।
करचरणवदनचिकुरादिभिरुज्ज्वलितैरुपैति नरपालम् ॥ ४६ ॥

गुरुणा गुणानुबन्धाल्लघुरपि नीतो निमज्जनमुपैति ।
उपलनिबद्धालाबूनिचय इवान्तर्जडस्यापि ॥ ४७ ॥

परिषदमपरिचितां च प्रविश्य धैर्यापवर्जितातङ्कः ।
आशीःपद्यविशेषं [वि]चिन्तयन्वीक्षते क्षितिपम् ॥ ४८ ॥

सुललितकलादिवलिताञ्जलिरुपयातो नृपासनसमीपम् ।
विनयगुणावनतवपुर्विकाशिमुखमाशिषं ब्रूते ॥ ४९ ॥

आमेरुमलयमूर्वीवलयमलंकृत्य कीर्तिकर्पूरैः ।
मङ्गलमाप्नुहि नित्यं गुणमय जय जीव यावदादित्यम् ॥ ५० ॥

उपविशति नृपनियुक्तः केनचिदन्येन वा जनेनोक्तः ।
निजवेशजातिसमुचितमासनमालोक्य सेवते सुमतिः ॥ ५१ ॥

परिषज्जनोपवेशनविन्यासविशेषसदृशमुपविष्टः ।
सति संभवे समीपं संमुखमपि सेवते नृपतेः ॥ ५२ ॥

क्षणमपसारितसाध्वसमुपविश्य सतां विलोक्य वदनानि ।
परतः स्वतोऽपि वा स्वं वचनावसरं प्रवर्तयति धीरः ॥ ५३ ॥

आवर्जित इव विनयादीषन्मधुरस्मितानन्सरोजः ।
अङ्गार्पितकरयुगलः कलयति विज्ञप्तिमीक्षतो नृपतेः ॥ ५४ ॥

जीवतु चिरं नरेन्द्रः किंचिदुपन्यस्तुमस्ति मे वाञ्छा ।
इत्यादिवागुपक्रमकुशलोऽवसरे सुभाषितं ब्रूते ॥ ५५ ॥

निःसाध्वसमतिमधुरं स्पष्टाक्षरमुन्नतग्रीवम् ।
बहुधाव्यवहितसमयानुचिन्तितं पाठ्यमाशिषां पद्यम् ॥ ५६ ॥

वर्ण्यो बलिरिव दाने सुरगुरुरिव विश्वविज्ञाने।
अमरेश्वर इव समरे स्मर इव शोभासु भूपालः॥ ५७॥

इति श्रीहरिहरसुभाषिते प्रवासप्रकरणम्॥ ४॥

---

देव त्वन्नेत्रपाथोरुहसहचरणादस्तु पद्मा सपद्मा
वाग्देवी सत्कवीनां विशदयतु यशो वीर युष्मद्यशोभिः।
सन्तु द्वीपास्त्वदोजःप्रतिनवतपनैरेव संतापितघ्रा
भूयात्तद्वैरिनारीनयनमृगमयी भूधरारण्यभूमिः॥ १॥
साम्भोदर्भतिले भवत्करतले मेरौ भयोत्कम्पिनि
ब्रूमः किं वयमेव देव भवतो भव्याय दिव्याशिषः।
प्राप्य प्रार्थनयाप्यलभ्यमसकृत्रस्यत्प्रियालिङ्गनं
स्वर्गेऽप्युत्पुलकाङ्कुरैस्त्वयि सुरैराशीःपरैर्भूयते॥ २॥
भूमीपाल भवत्कृपालव इवोपासन्नकल्पद्रुमः
श्रीमत्सैन्यवदन्यजित्वरपुरोद्दाहस्फुरत्साहसः।
युष्मद्वैरिवदुज्जटो गतपटो भिक्षावशस्त्वद्यशः-
कर्पूराचलवत्सितस्तव हितः कोऽप्यस्तु लोकस्तुतः॥ ३॥
गङ्गोत्सङ्गवलन्मृणालशकलप्रत्याशयोद्यत्करं
भोक्तुं मुग्धहृदि क्षपाकरकलां लम्बोदरे धावति।
सद्यस्त्वद्यशसि स्वयं गिरिभुवा गीते पुरः प्रोच्छल-
त्तद्धावल्यतिरोहिते हिमकरे हृष्टो हरस्त्रायताम्॥ ४॥
भुज एव तव क्षितेर्निवासस्त्वदपाङ्गे कमलालयाविलासः।
सुखलब्धवधूद्वयीसमाजस्तव चित्ते हरिरस्तु भक्तिभाजः॥ ५॥
यौष्माकीणयशोनिशाकरशते नित्योदिते मुद्रिते
नाभीपल्वलपङ्कजे मुररिपोरन्तर्गते ब्रह्मणि।
निःप्रत्यूहमहन्यपि च्युतचिरव्रीडाभरं भूयते
भूयादब्धिभुवो रतोत्सवरसव्यासङ्गलग्नं मनः॥ ६॥

चैत्रीचन्द्राभचन्द्रातपतलचकितोच्चित्तचञ्चच्चमूरु-
प्रोदञ्चल्लोचनानां चतुरकरचलच्चामरोच्चारिचेलः ।
न्यञ्चच्चामीकरार्चीरुचिरुचिरमुखस्त्वं चिरं चारुकीर्ते-
र्वीचीनां चाकचिक्यं चतुरुदधिचराश्चारयोच्चैश्चकोरान् ॥ ७ ॥

निर्णीय त्वत्प्रतापज्वलनसमुदयं किं द्रवीभावभीत्या
ब्रह्मा ब्रह्माण्डमेतत्कनकमयमधाद्वीरवारिण्यपारे ।
अस्याप्यन्तस्थनागावलिमनवरतान्निर्झरान्निम्नगानां
लक्षं सप्ताम्बुराशीन्यधित निरवधीनुन्मदानम्बुवाहान् ॥ ८ ॥

त्वदरिपुरपुरंध्रिभिः प्रतापज्वलनमुपेतमुदीक्ष्य तावकीनम् ।
कति कति न समन्ततः क्रियन्ते प्रतिभवनं नयनाम्बुभिस्तटिन्यः ॥ ९ ॥

नित्याक्षीणकले निरङ्कधवले युष्मद्यशोमण्डले
व्योमारोहिणि रोहिणीपतिरतिव्यर्थोऽभवद्भूपते ।
एतस्य प्रतिकारमेष महतो वैरस्य वीराचर-
न्वीक्ष्य त्वां मुदिताः पुरेषु वनिताः संतापयन्भ्राम्यति ॥ १० ॥

त्वत्कीर्त्योपनतं न किंनरपतेऽरण्यस्थितौ वैरिणां
यद्वासांसि मलीमसानि धवलस्फीतन्त्यधौतान्यपि ।
ज्योत्स्नन्त्याशु तमांसि चन्दनरसक्षोदन्ति पङ्कच्छटा
मृद्भाण्डान्यपि राजतन्ति परितः सौधन्त्यरण्यान्यपि ॥ ११ ॥

यैर्युष्मत्करवालकालदशनोत्कृत्तैरिहैकक्षणे
कीर्णा भूमिरियं भयंकरतरैरेतैरुपेतैर्दिवम् ।
नीरन्ध्रं परिपूरितामुपचितो रथ्यासु मिथ्याभय-
व्यग्रैः स्वर्गिभिरर्गलाकुलगृहद्वाःस्थैरवस्थीयते ॥ १२ ॥

त्वदसिदलितदेहैरेकदैवोत्पतद्भि-
र्व्यरचि विधुरवर्गैश्चालनीचण्डरोचिः ।
अहमहमिकयासिन्दिग्वधूभिर्विधूते
धरणिरजनिपुष्टा कीर्तिपिष्टातकैस्ते ॥ १३ ॥

नरेन्द्र मन्ये निगदन्तु देवं मया दयादक्षिणदृष्टमेव ।
द्विपायिते दीनपयःपयोधेः पृथ्वीतले कल्पतरोः प्रवाहः ॥ १४ ॥

संनिविश्य मनसा क्षितिप त्वां सैन्धवेषु समशोधि विरोधः ।
येन ते चिरदरिद्रकुलेषु ग्रामवासविकलेषु पतन्ति ॥ १५ ॥

इह तव देव निपतता करकमलकुशोदके [तु] जायन्ते ।
तत्तद्दूरदरिद्रद्वारि द्विपदानवारिभिः सरितः ॥ १६ ॥

प्राप्तास्त्रासात्पिपासातिशयमुपगताः पातुमारण्यमम्भो
युष्मद्विद्वेषियोषाः श्वसितसमुदयैस्तत्तदीयैरशोषि ।
एतत्संवीक्ष्य मूर्छानिपतिततनवो नैव जीवेयुरेता-
श्चेत्नोपेताः शवर्यो निजनयनजलैः पल्वलं पूरयेयुः ॥ १७ ॥

वीर त्वद्वैरिदारा गहनगिरिमहागह्वरान्तस्थमित्रं
त्वत्त्रासाद्गुप्तवासा दवकलितहृदो यद्यदेव प्रपन्नाः ।
तत्तज्ज्योत्स्नायमानं धरणिपरिवृढ प्रेक्ष्य युष्मद्यशोभिः
सद्यो मोहान्धकारानुसरणशरणा वासरान्वाहयन्ति ॥ १८ ॥

भृङ्गारेण महीमयेन करकं क्षौमेण वल्काम्बरं
पट्टीयप्रकरेण बर्हनिवहं हारेण गुञ्जावलीम् ।
इत्थं प्रार्थनया कया न भवतो वैरिस्त्रियो वस्तुभिः
क्रीडन्त्यात्मविनिह्नवाय चकितं चिह्नान्यरण्यस्त्रियाम् ॥ १९ ॥

निभृतमुषितैर्योषिद्वृन्दैर्वनान्तलतान्तरे
प्रतिदलततिच्छिद्रे च्छिद्रेऽर्पितेषु भियाक्षिषु ।
शिव शिव मृगीयूथभ्रान्त्या समीपमुपागता-
न्दधति हरिणान्हस्तैर्जीवातवे तव शत्रवः ॥ २० ॥

गान्धारा गुप्तदारास्त्वयि चलति गलद्बाष्पधाराविहारा
गाढास्त्रासावगाढा क्षितिपकुलमणे गुर्जरा जर्जराशाः ।
तैलङ्गास्त्यक्तशङ्कास्त्रिभुवनतिलक क्लिश्यदङ्गाः कलिङ्गा
मोरङ्गा मुक्तरङ्गाः सपदि समभवन्वीररङ्गा विहङ्गाः ॥ २१ ॥

वीराणामेष गन्ता नगरमयमरीन्संमुखानेव हन्ता
सद्यो भेद्यं ततस्तैर्वत रुचिरमिदं मण्डलं चण्डभासः ।
मत्वैतन्मेदिनीयं प्रतरुणकरुणोत्कम्पिता त्वत्प्रयाणे
सेनाधूलीवितानाञ्चलतलविवलद्विम्बमेनं विधत्ते ॥ २२ ॥

त्वत्सैन्ये धरणीमणे प्रचलति प्रोत्पीतमर्मान्तरे
कूर्मे द्राक्परिवर्तिनि क्षितितले व्यावर्तमाने ततः ।
वार्धेर्वारिभवे वहिर्विचलिते मैनाकपक्षक्षतिः
किं न स्यात्स न चेद्भवेद्विकलद्दग्धूलीभरैर्वासरः ॥ २३ ॥

यौष्माकीणे प्रयाणे प्रचलजलनिधिप्रोच्छलद्वारिपूर-
स्नातैर्नालम्भि तोयप्लुतधरणिगतैर्धूलिरुद्धूलनाय ।
सेनारिङ्गत्तुरङ्गावलिवलितखुरोद्धूतधूलीवितान-
व्यासाङ्गैर्निष्प्रयत्नं स्थितमतिसुखितैर्दिग्गजग्रामणीभिः ॥ २४ ॥

भूमीपाल कृपालवस्तव हया द्राग्दीर्णताया भया-
दुल्लङ्घ्यैव गिरीनटन्त्यघटितैष्टापानलैश्चञ्चलैः ।
क्षुद्रा क्षोणिरियं स्फुरत्खुरपुटक्षु[ण्णा]क्षणान्मास्त्वितो
धावन्त्यम्वरमेव चत्वरमनुप्राप्यान्तराप्यायिताः ॥ २५ ॥

इन्द्रो निन्दति वाहमाह दिनकृद्दुर्वा च मे वार्वत-
श्चञ्चुर्न्यञ्चति किं न पन्नगरिपोरन्तस्त्रपोद्रेकतः ।
वातः खञ्जति पङ्गुपुञ्जति मनोराजिर्भवद्वाजिषु
द्रेषामाजिषु वैरिणामभिमुखं धावत्सु यावत्सुखम् ॥ २६ ॥

यान्तु क्वामी समीराः क्षणमपि च मनः कुत्र न स्पृष्टपृष्ठं
तिष्ठन्त्वेते सहस्रं समपथि गिरयः को वयस्यापकर्षः ।
किं नश्छिन्नं प्रतेयुर्यदि जलनिधयः सर्वतः संनिकर्षा-
न्द्रेषाहर्षात्नृपैतत्त्वयि जिगमिषति व्याहरत्येव वाहः ॥ २७ ॥

समुद्रावधिक्षुद्रभावान्दधाना कुतो भूर्यतोऽभीष्टवेगो विनष्टः ।
हयैर्मन्युनेवामुना हन्यते किं धरा निर्भराहंकृतैः पद्भिरेव ॥ २८ ॥

दृष्टोदञ्चत्कुथान्तान्धरणिप करिणो धावकस्तावकीना-
न्किं भूयो जातपक्षाः क्षितिवलयमिदं क्ष्माभृतः क्षोभयन्ति।
इत्युद्भ्रान्ताः प्रधावेदमरपरिवृढः स्यान्न सद्यः शची चे-
द्भेरीभाङ्कारघूर्णत्कनकगिरिशिरःस्थायिनी स्थापनीया॥ २९॥

शृङ्गेनैकेन हेम्नः कथमयमभवन्मेरुरग्र्यो गिरीणा-
मित्येतं जेतुमेतस्तुहिनगिरिरसौ श्रीमतः सौधभावम्।
आकीर्णः स्वर्गशृङ्गैः सुललितकलशव्याजतो जायमानै-
र्युष्मत्सेवानुरूपं विभवमलभत क्ष्माफलस्त्वत्प्रसादः॥ ३०॥

प्राप्ता वासकसज्जतां प्रथमतस्त्वां यु(यो)द्धुमुत्कण्ठिता
योधास्तेऽभिसृता मनागरिचमूः स्वाधीननाशस्थिता।
भीत्या प्रोषितभर्तृका समभवत्त्वत्सायकैः खण्डिता
दूरादन्तरिता विधाय कलहं हा विप्रलब्धा विधेः॥ ३१॥

शृङ्गारस्त्वमसि क्षितावरिबले वीरः परेषां पुरे
रौद्रो दीनहृदामुदारकरुणस्तैस्तैर्गुणैरद्भुतः।
हास्यो नित्यमदातुरङ्गदलने बीभत्स एव द्विषां
दुर्वृत्तस्य भयानको नवरसः शान्तोऽर्थिसंतोषणे॥ ३२॥

प्रामाण्यं परतः स्वतोऽपि भवतो विज्ञायते सन्मते
भूमीन्दो भवता क्षणस्थिरतया वर्णाश्चिरं स्थापिताः।
सर्वज्ञैकसदीश्वरोऽपि न परं ब्रूते भवानीश्वरं
तन्नैयायिकनायकस्य भवतो मीमांसकत्वं कुतः॥ ३३॥

स्वतः प्रकाशो मनसो महत्त्वं धर्मेषु शक्तिश्च तथान्यथा धीः।
भूपालगोपालपदैकभक्तेरन्यैव नैयायिकता तवेयम्॥ ३४॥

शक्तिः प्रमापयति वीर तवोपमानं
प्रामाण्यमाप्तवचनेषु परैव जातिः।
जातौ गुणागुणगणाश्रयिणो विशेषा
वैशेषिकं किमपि दर्शनमद्भुतं ते॥ ३५॥

त्वद्बाणेषु यमो जयेषु नियमो याने स्थिरं चासनं
श्रान्तौ श्वासविनिग्रहो गुणगणे प्रत्याहृतिः श्रीमतः ।
ध्यानं शूलिनि धारणा च धरणौ धर्मे समाधिर्यत-
स्तन्निर्विण्णहृदः किमीश्वरपरे ध्यायन्ति पातञ्जले ॥ ३६ ॥
एकं वस्तु यदस्ति नित्यनिबिडानन्दप्रबोधात्मकं
सत्यं तत्त्वमसीति वाक्यमखिलं त्वय्येव विश्राम्यति ।
त्वामाकर्ण्य न किंचिदन्यदवनीशृङ्गारमन्मन्यते
त्वय्यास्ते जनकादिकीर्तिजनके किं ज्ञानमीमांसया ॥ ३७ ॥
गुणास्ते निःक्षोभाः प्रकृतिरियमाधत्त भवतो
महत्तत्त्वं तच्चाप्यजनयदहंकारमुचितम् ।
कृतं तेनाप्युर्वीरमण गुणमात्रार्जनमितः
स्फुरत्कर्मज्ञानेन्द्रियसचिवसूर्यादिकमभूत् ॥ ३८ ॥

इति श्रीहरिहरसुभाषिते राजप्रशस्तिप्रकरणम् ॥ ५ ॥

---

स्वस्याथ वा परस्य द्वित्राणि मनोहराणि पद्यानि ।
आख्याय व्याख्येयान्यव्यग्रं मधुरमग्रतो नृपतेः ॥ १ ॥
विद्वानयमितरो वेत्याख्यानव्याख्ययोरेव ।
प्रायः प्रथमे पद्ये परीक्ष्यते परिषदा पुरुषः ॥ २ ॥
पद्यप्रसङ्गसंगतमथान्यथा वापि किंचिदवतार्य ।
स्वाधीतदर्शनोक्तं युक्तं विद्वानुपन्यसति वस्तु ॥ ३ ॥
यावद्वचनावसरं ब्रूते मधुरं निराकुलं सदसि ।
पश्यन्नरपतिसदनं तिष्ठति तदनन्तरं धीरः ॥ ४ ॥
नासंततमभिदध्यादध्यास्य सदः प्रभुत्वमत्त्वस्य ।
यावन्नरपतिरुचितं वक्तुमपर्याप्तमप्युचितम् ॥ ५ ॥
पृष्टे ब्रवीति हृष्टे हर्षमुपायात्यवादिते मौनी ।
नृपसदसि नोचितामप्यसंमतो वाचमुद्गिरति धीरः ॥ ६ ॥

उत्थाने सभ्यानामुत्तिष्ठति याति तेषु यातेषु ।
मतमन्तरापि राज्ञो विज्ञायाशीःप्रदो बहिरुपैति ॥ ७ ॥
प्रत्यहमेवमुपास्ते सदवसरे संमतो नृपतेः ।
नाज्ञातनृपतिसंमतिरुपसर्पति संनिधिस्तस्य ॥ ८ ॥
नानवसरे नरेशं सुखयति पुरुषः प्रियोऽपि समुपास्य ।
दिवसे न शीतधामा तामादरणीयतां लभते ॥ ९ ॥
मङ्गलनिलयो भूयाश्चिरमवनीं पालयञ्जीयाः ।
जय भूमिचक्रशक्र स्वस्तीत्याद्याशिषः पुरो वाच्याः ॥ १० ॥
राजाशिषोऽवसाने द्वित्रा नरपालपूजिताः सुधिया ।
नत्याशीर्भ्यां सभ्या·······यथोचितेन परितोष्याः ॥ ११ ॥
नोच्चैर्न चातिनीचैर्न सभामध्ये न हीनसंबन्धे ।
न नृपासनास्त्रवस्त्रस्पर्शेऽपि वसन्ति विद्वांसः ॥ १२ ॥
अत्युच्चैरतिनीचैरश्लीलमनुक्तमनुपयुक्तं च ।
न वदति नृपतिसभायामादरमीप्सुर्महामनसाम् ॥ १३ ॥
नृपसचिवसंकथायां संगतमपि नाभ्युपेत्य वक्तव्यम् ।
अनधिकृतिभाषितायां वाचि विचित्ता भवन्ति धनमत्ताः ॥ १४ ॥
अनुरञ्जय राजानं मा जानञ्जातु कोपय प्रकृतीन् ।
एतद्द्वयानुरागस्थिरया तिष्ठ प्रतिष्ठयाश्लिष्टः ॥ १५ ॥
गुणवसनभूषणाद्यैर्लभतामलमादरं नृपतेः ।
प्राप्नोति प्रियवेदी नेदीयानवसरे सुसौभाग्यम् ॥ १६ ॥
बहुवाक्यैरविरुद्धो बद्धस्पर्धो जनेन हीनेन ।
स्वमुखेन याचमानः स्वगुणश्लाघी च लाघवं भजते ॥ १७ ॥
उल्लङ्घ्य सरिदरण्यग्रामगिरीन्कामकातरा यान्तु ।
अभिसारिण्य इवान्तस्तृष्णां निगदन्ति न स्वयं सुधियः ॥ १८ ॥
वेशः स एव सगुणः स द्रविणोपार्जनोपायः ।
यत्र स्ववंशविद्यासदृशी न विशीर्यते कीर्तिः ॥ १९ ॥

अभिलषति न खलु पुरुषः श्रियमपि कीर्त्या विना कृतां कुशलः ।
क्षणिकाय वस्तुने कस्त्यजतीह चिरस्थिरं श्रेयः ॥ २० ॥
राजा न जातु मित्रं सेवामेवाचरद्भिरपि वेद्यः ।
आजन्मलालितेन द्विजो रजोऽन्धेन भोगिना दष्टः ॥ २१ ॥
लघुरिति न भूमिपालो बालोऽप्यालोक्यते विदुषा ।
भसिताचितेऽप्युदीते दहनकणे सा हि दाहिका शक्तिः ॥ २२ ॥
कृतमन्त्रिमनःक्काथो लक्ष्मीनाथोऽपि नरपतेर्दयितः ।
कण्ठे कठिनकुठारप्रहारतः प्रापितो मरणम् ॥ २३ ॥
उचितामुपास्य रुचितामभिधेहि गिरं निरन्तरावहितः ।
अप्यायतिमतिपुरुषे प्रभुणा कलुषेण भूयते कथिते ॥ २४ ॥
अन्धा इव बधिरा इव मूका इव मोहभाज इव ।
पङ्गव इवानभिमते नृपतेर्निवसन्ति साधवः सदसि ॥ २५ ॥
तालज्ञा इव तरला यथा यथा नर्तयन्ति धनमत्ताः ।
नृत्यन्त्यपरिस्खलितास्तथा तथैवार्थिनः कृपणाः ॥ २६ ॥
आशापाशनिबद्धो नृत्यति किं वा नरो न धनिकपुरः ।
हतशैलूषस्य विधेः कुत्र विधेयः सुखमुपैति ॥ २७ ॥
अलमात्मीयं विदितं विदितं धनिकस्य याचको रहितः ।
चन्द्रं ब्रवीति चटकं चटकं चन्द्रं च लोभलोलमनाः ॥ २८ ॥
अमृतायतामिति वदेत्पीते भुक्ते क्षुते शतं जीव ।
छोटिकया सह जृम्भासमये स्यातां चिरायुरानन्दौ ॥ २९ ॥
अल्पेऽपि नृपतिदत्ते प्रतिश्रुते वापि दातुमेतेन ।
उत्थायाशीर्देया क्वचिदुपविश्यापि परिषदौचित्याः ॥ ३० ॥
यदि नामासंगतमपि संगमयितुमस्ति कौशलं वचसि ।
प्रस्तावे स्तुतिमाचर सुखहरणीयोऽनयैव नरपालः ॥ ३१ ॥
किं सम्यगिति प्रश्ने भीतः स्तोत्रं श्रियः पतिः प्राह ।
स्तव्यस्तेन श्रीमान्कस्य न वा वल्लभा स्तुतिर्भवति ॥ ३२ ॥

संकथनमप्यनर्हे पश्यति नृपतौ परेण केनापि ।
स्तुत्याशीःस्तुत्यादेः का वान्यस्मिन्कथापि तत्पुरतः ॥ ३३ ॥
राजनि पराग····ग्रन्थिं श्लथयन्ति संततं पिशुनाः ।
एषामिहावकाशो रेखासदृशोऽपि वर्ज्यते विदुषा ॥ ३४ ॥
क्षुद्रोपद्रवभीत्या न त्याज्या राजपरिषदः पुरुषैः ।
कण्टकभेदादिभिया सुधिया केनापि मुच्यते देहः ॥ ३५ ॥
कुलशीलपौरुषादि प्रख्यातयशोविशोभिजन्मानम् ।
धनवन्तमधनमपि वा रञ्जय राजानमुन्नतारम्भम् ॥ ३६ ॥
नीचसचिवसंघृष्टं धनसंचयलुब्धमल्पसंतुष्टम् ।
धर्मपथादपरक्तं वृथा विधायापि नृपतिमनुरक्तम् ॥ ३७ ॥
यद्यपि गुणसमवहितो विहितोचितपौरुषप्रणयः ।
क्षुद्रक्षितिपसभायामाचारणया समुपविश्य ॥ ३८ ॥
त्यागी वरमल्पधनः कुबेरकल्पेन किं कदर्येण ।
उदधेरलभ्यपयसः सुलभजलं पल्वलं श्रेयः ॥ ३९ ॥
अलमथ कथनसहस्रैर्नरपतिगुणदोषतारतम्यस्य ।
द्रविणार्पणे समर्थः सेव्यो राजेति परमार्थः ॥ ४० ॥
शास्त्रार्थव्याख्यानैर्धर्मकथाभिर्नयाख्यानैः ।
ललिताभिः कविताभिः प्रसङ्गतः प्रीणयेन्नृपतिम् ॥ ४१ ॥

इति श्रीहरिहरसुभाषिते राजोपासनप्रकरणम् ॥ ६ ॥

---

विज्ञाय नीतिमन्तं श्रीमन्तं सेवते सुमतिः ।
अनयप्रणयिनि राजनि नाजनि कुत्रापि कल्याणम् ॥ १ ॥
अत्युपचितैरुपायैश्चक्रभृदेको भुजैरिव चतुर्भिः ।
नृपतिः श्रियमतिसुचिरं हरिरिव परिरभ्य निर्भरं रमते ॥ २ ॥
साम समे सुमतीनामधिके दानं रिपावुचितम् ।
भेदः सर्वत्र हितो विहितो विजयाय विग्रहः कृतिनः ॥ ३ ॥

समकक्षे प्रतिपक्षे साम्ना सुखमेधते सुमतिः ।
अन्यत्र सामकामः पश्चात्परितप्यते नृपतिः ॥ ४ ॥
साम्नान्वितोऽपि बलवाञ्जलमिव वह्निं विनाशयत्येव ।
तस्माद्बलवति सामध्यानमलं मन्यते सुमतिः ॥ ५ ॥
वदतोऽपि प्रियवचनं रुदतोऽपि हि कण्ठमाश्लिष्य ।
शपतोऽपि दैवतशतैर्न भवति विद्वान्वशे द्विषतः ॥ ६ ॥
रणपतितस्य मुखान्मे शृणोतु भूयो रिपोर्धनं गुप्तम् ।
इत्याहूय समीपं हतो हतेनापि हतनृपीयेन ॥ ७ ॥
अतिबलिनामपि मलिनाशयेन विश्वंभरादीनाम् ।
विश्वासोपनतानां वासोपुत्रेण जीवितं जह्रे ॥ ८ ॥
अपरीक्षितपरवञ्चनमञ्चति लोभादवेक्षितप्रेक्षी ।
व्याधूतपक्षमवशो विहन्यते पक्षिवत्क्षितिपः ॥ ९ ॥
क्रूरचरितेन संगतमसंगतं सत्स्वभावस्य ।
जीवति पटीरविटपी परिरभ्य न पावकं प्रायः ॥ १० ॥
निहतं गीतेन मृगं मीनं बडिशेन तेजसा शलभम् ।
दृष्ट्वापि यदि न पश्यति नश्यति किं केन करणीयम् ॥ ११ ॥
कामं कुमीनसदृशं राज्यमपि प्राज्यकण्टकं कुशलः ।
पाकान्वितमतिसुरसं भुङ्क्ते बहुधावधानेन ॥ १२ ॥
अतिबलवति मतिशाली सदसि नृपाली नमस्कृते नृपतौ ।
दानविधिं विदधानो गताभिमानोऽतिवाहयेत्समयम् ॥ १३ ॥
अर्थेन रक्षितमिदं राज्यं पुनरर्थमर्पयति ।
अर्थैकपरो नृपतिः परिहरति पुनः क्षणादुभयम् ॥ १४ ॥
अप्यतिशयितमनर्थं समयत्यर्थं समर्पयन्नृपतिः ।
तदनर्पयन्निरर्थं प्राणेन समं परित्यजत्यर्थम् ॥ १५ ॥
उत्तारयति विपत्तावतिधनमत्तामपक्षते क्षितिपः ।
चेन्नेह तदुपयोगस्तन्नियतं वित्तसंचयो रोगः ॥ १६ ॥

रविरिव सुचिरेण रसं भृशं नृपो धनमुपादत्ते ।
काले वर्षति हर्षान्निस्पृहमुच्चेऽपि नीचेऽपि ॥ १७ ॥
दानं राज्यनिदानं प्रबले स्वबले च दुर्बले नृपतेः ।
फलमत्र कालहरणं सहप्रहरणं च पापसंहरणम् ॥ १८ ॥
वृत्तिभिरनिवृत्तमुखा यस्य नृपस्योपजीविनः पुरुषाः ।
स हि समिति विजयमयते शेते सह वा सहस्रेण ॥ १९ ॥
यद्भुक्तमभून्नृपतेराकोटिवटावधि भटानाम् ।
यावद्गुणं तदर्पणमिदं वदन्त्याजि पिशितभुजः ॥ २० ॥
विजितो रिपुरपखेदं भेदं चेत्तस्य साधयेन्नृपतिः ।
सुहृदा योऽजनि भिन्नः किं न हि तं तुप्य वेधसा विहितम् ॥ २१ ॥
एकारिमित्रयोश्चेत्परस्परं भूपयोर्भेदः ।
तदरिः परिणतनीतिः सुखमभियोगं करोतु गतभीतिः ॥ २२ ॥
शत्रोः पराभियोगश्चेदजनि निरौषधं गतो रोगः ।
परपरिभूतस्य यतः कुतोऽन्यतः पौरुषप्रसरः ॥ २३ ॥
श्रितसागरपरिखाङ्कामवाप्य लङ्कामपि दशास्यः ।
····तदेन समरपृष्ठे शयितो दयितोऽपि गिरिसुताभर्तुः ॥ २४ ॥
अभिलषतोरनुभावात्तिलोत्तमायाः किलोत्तमानुभयोः ।
सुन्दोपसुन्दयोरपि नाशो भेदादुदाह्रियते ॥ २५ ॥
मित्रे धनैरथ जनैर्नयेन विनयेन भेदिते नृपतेः ।
कुत्राहिभयव्याकुलहृदो बहिर्भावसंभवो भवति ॥ २६ ॥
भेदो भवति निहन्ता क्षुद्रेणापि स्वकेन लोकस्य ।
अन्तःशरीरजन्मा स्फोटोऽपि स्फुटतरं विनाशयति ॥ २७ ॥
निजबलपौरुषबाध्यं यदि वोपायान्तरासाध्यम् ।
नृपतिर्विज्ञाय रिपुं चण्डकृतिर्दण्डमाधत्ते ॥ २८ ॥
शक्तिः प्रभावमन्त्रोत्साहकृतां प्राह पण्डितो नृपतेः ।
संपन्नः सुखमनयापनयाय परस्य विग्रहं कुरुते ॥ २९ ॥

चिरपरिपोषितवाहः स्ववृत्तिसोत्साहसुभटसन्नाहः ।
नीरन्ध्रगुप्तमूलः प्रयाति राजा रिपोरननुकूलः ॥ ३० ॥
देवद्विजगुरुभक्तिश्चिरपरितुष्टैर्भटैर्युक्तः ।
बहुधा विमृष्यकारी नारीणां वशमुपैति नरपालः ॥ ३१ ॥
अबलोऽसि न जितकाशी प्रतिभटराशीन्परापत क्षितिप ।
जाताम्भःकणपातः क्व विनश्यत्यनलसंघातः ॥ ३२ ॥
शूरोऽसि दूरपातिभिरात्मसमैः सद्भटैरपि समेतः ।
युध्यस्व बद्धसाहसमधिकैरपि धीरवीरबलैः ॥ ३३ ॥
विजयेन राज्यभोगः संगरमरणेऽप्सरोभिरभियोगः ।
मा विरम वीर युद्धादुभयविरुद्धा पशोर्यशोहानिः ॥ ३४ ॥
युध्यस्व बद्धमानं दानं सानन्दमाचर धनानाम् ।
मा तात कातरत्वं राज्याय भज क्षणक्षयिणे ॥ ३५ ॥
निर्भरमुपार्जय यशो न वशो भूयाः कृपणतायाः ।
आकर्ण्य नरपतीनां पुण्यमतीनां पुरा चरितम् ॥ ३६ ॥
क्षुद्रेऽपि क्षोणिभुजां न जातु वैरिण्युपेक्षया स्थेयम् ।
स्वयमनिहतः समुद्रे क्षिप्तोऽपि जघान शम्बरं बालः ॥ ३७ ॥
कपटादपि रिपुहननं कुर्यादिति नीतिरौशनसी ।
हननमृते च गुरुमते बन्धादि विधीयते रिपोः कपटैः ॥ ३८ ॥
धीरः सत्कुलजन्मा सन्मार्गरतः कृतज्ञसेवी च ।
स्फुरितमतिर्नृपतिहितः सुकृतैरुपयात्यमात्यपदम् ॥ ३९ ॥
नृपहितविनिहितहृदये सुकृतिनि सचिवे निवेशितात्मभरम् ।
यद्राज्यं तेन सुखी भवति परायत्तसिद्धिरवनीशः ॥ ४० ॥
स्वस्मिन्नेव समस्तो येन न्यस्तो भरः क्षितीशेन ।
स्वायत्तसिद्धिरेषः स्वकरधृते मन्दिरे वसति ॥ ४१ ॥
दुःखं परवशमखिलं स्ववशं सुखमित्युदाहृतं मुनिभिः ।
तदनवहिते सहाये यद्राज्यहितेऽवगन्तव्यम् ॥ ४२ ॥

राज्यं हि सचिवनृपयोरत्युच्छ्रितयोर्यदायत्तम्।
तद्वै राज्यं तत्फलमलम्भि शकटारनन्दाभ्याम्॥ ४३॥
नृपसचिवयोर्द्वयोरपि सरूपयोश्चेद्विभक्तिरवशिष्टा।
द्वन्द्वापवादहेतुर्नियतं स्यादेकशेषविधिः॥ ४४॥
पौराः परिणतनीतेः फलेन जानन्ति मन्त्रितं नृपतेः।
इदमन्यैरुन्नीतं विपरीतं फलति निर्णीतम्॥ ४५॥
हृदयं नृपतेर्मन्त्रो मर्माणि भवन्ति मन्त्रिणस्तस्य।
तेषामपि यदि भेदो विच्छेदो जीवतस्यैव॥ ४६॥
निजहृदयं सत्प्रणधिः शास्त्रं चक्षुस्त्रयं नृपतेः।
यैः पश्यत्यतिसूक्ष्मं व्यवहितमपि दूरवर्ति वा वस्तु॥ ४७॥
पर्यालोचयति न यः कार्याणि कृतान्यपि प्रकृतिमुख्यैः।
स्वयमनवेक्षितकर्मा कृषिपतिरिव हीयते स नृपः॥ ४८॥
हिमकरसमः समक्षे परं परोक्षे सखा वृषार्कस्य।
जलधिरिव दुरवगाहस्तमाह नरपालमाङ्गिरसः॥ ४९॥
अन्धोऽप्यन्योक्तपथो दण्डधृगन्योपचरणीयः।
राजत्वमप्रतिहतैर्जनानुरागैर्भजति भूपः॥ ५०॥
उच्चैर्यद्यस्ति मनः किं विपदा संपदागन्त्री।
पुरुषस्य मनसि भग्ने मग्नैरापत्सु लक्ष्यते लक्ष्मीः॥ ५१॥
लघुरप्युच्चैश्चरितः क्रमेण गन्तासि गौरवं तात।
कलया कलया काले कलानिधिः पूर्णतामेति॥ ५२॥
भज लघुमपि भजमानं मानं मा वर्धयावलिप्तस्य।
यदि सर्वत्र समत्वं श्रियोऽसमत्वं विमुञ्च योगीव॥ ५३॥
हृतमथ मधुरतरैरपि भूमिभृति व्यापृतैर्बहुभिः।
प्रतिजानामि समृद्धिं साहसमुक्ते च नित्यमुद्युक्ते॥ ५४॥
इयमत्र कयापि दिशा नीतिदृशा दर्शिता पदवी।
चाणक्याद्यभिधानाज्ज्ञेयनिधानादथान्यदुन्नेयम्॥ ५५॥

इति श्रीहरिहरसुभाषिते राजनीतिप्रकरणम्॥ ७॥

---

प्रस्तावे समयादेर्वर्णनमाकर्णयन्नृपतिः ।
प्रायः प्रसीदतीति प्रसादयेदेनमेतेन ॥ १ ॥

कान्ते स्नेहनिधौ समीयुषि मधौ जित्वा श्रियं शैशवीं
विश्लेषादितरस्य पाण्डिमभृतामालीलतानामियम् ।
कर्तुं नूतनचित्रपत्ररचनां किं काननश्रीरिमां
प्राचीनां पवनाञ्चलेन परितः पत्रावलीं लुम्पति ॥ २ ॥

दरोन्मीलन्मल्लीमुकुरकुहराभ्यन्तरगतं
त्वरास्वाद्यं सद्यो दलमविकलीकृत्य सकलम् ।
समीपे संविश्य क्षणमथ परिक्रम्य परितो
न पातुं हातुं वा प्रभवति मरन्दं मधुकरः ॥ ३ ॥

अन्योन्यस्य नियन्त्रणापरिभवात्प्रौढशीतातपा-
त्पुष्प्यत्किंशुकचूतनूतनदलाविर्भूतशाणश्रियः ।
पद्मोल्लासितगन्धवासितवहद्वातावदातद्विषो
मोदोन्मादजुषो हरन्ति हृदयं वासन्तिका वासराः ॥ ४ ॥

प्रसूनपटलारुणोन्नतपलाशजालक्षका-
न्मनांसि मदनो बलाद्दहति मानिनीनां मुहुः ।
न चित्रमिदमुद्गता यदिह भृङ्गधूमावली
वियोगिनयनाञ्जलीर्नयति खेदमस्राम्बुभिः ॥ ५ ॥

संततागतवसन्तमारुतप्रोल्लसल्ललितपल्लवोर्मिभिः ।
प्लाविता वनलताभिलाषिणः शाखिनः किमनुरागसागरैः ॥ ६ ॥

कर्णाटीकेलिवाटीविटपिनवदलान्दोलनाश्चोलवाला-
चञ्चच्चाम्पेयमालानिविलपरिमलाकर्षणोत्कर्षभाजः ।
वाता दातार एते मलयजमधुरामोदपूरैः प्रमोदा-
न्गोदावीचीविनोदार्जितजडिमगुणानुद्वहन्तो वहन्ति ॥ ७ ॥

व्याधूतचूतनूतनसौरभघनमञ्जरीपरीलब्धाः ।
वाताः स्मरानुयाता वसन्ति वासन्तिकासु लतिकासु ॥ ८ ॥

संभुक्तसुरभिमीनो रविरुच्चैरश्विनीमुपारूढः ।
स्फीताचरः सहेलं खेलति मेखेण राजेव ॥ ९ ॥

हित्वा हित्वा मधुरमनसो वीतकालान्रसाला-
नन्तःपुष्पामपि मधुलिहः पाटलां पालयन्ति ।
तत्तन्वीनां स्तनशिरिशिरो नूनमावोढुकामो
जातः स्वीयोत्सवसमुदयं वीक्षितुं स्वेदबिन्दुः ॥ १० ॥

पाटलपरिमलापहारिणः कुञ्जकोषझरगूढचारिणः ।
तस्करानिव तपर्तुवासरे प्राप्नुवन्ति न जनाः समीरणान् ॥ ११ ॥

रविकिरणानुगृहीता ग्रीष्मेष्वणवोऽपि रेणवो धरणेः ।
चरणं दहन्ति सुचिरोपमर्दनं कः क्षमो भवन्क्षमते ॥ १२ ॥

माद्यच्चण्डमरीचिमण्डलचलत्तेजोऽनलत्रासतो
दूरोन्मुक्तवियत्पथं विचरयन्वातं वलान्निष्कथम् ।
कुर्वस्तायमहो कदुष्णकलुषं भूयस्त्रिषन्द्राघय-
न्प्रस्वेदेषु वपूंषि निष्कुथयति ग्रीष्मोऽयमूष्मोल्बणः ॥ १३ ॥

उपभुक्ताशेषवृषं धावन्तं मृगशिरोंऽशभोगाय ।
कः खेचरकेसरिणं पश्यतु भास्वन्तमन्तकप्रतिमम् ॥ १४ ॥

स्वपिति ग्रीष्मभयादासायं सुखमाश्लिष्टसवातच्छायम् ।
जन्तुर्यत्नशतान्यारभतां को नामान्यत्रैतल्लभताम् ॥ १५ ॥

तापतीभ इव तोयचरोऽभूद्ग्रैष्मिकेषु दिवसेषु मनोभूः ।
यज्जले विहरतामिह यूनामाविरन्ति रतिकेलिरनूना ॥ १६ ॥

सारङ्गाः परमादरादगणितप्रौढातपाः पादपा-
नारुह्य स्फुटमाह्वयन्ति विरुतैरागामिनीं प्रावृषम् ।
औत्सुक्येन समीयुषां मधुलिहामन्तःस्पृहादन्तरं
ब्रूते नीपवनीषु हर्षजननीं संभाविनीं संपदि ॥ १७ ॥

हृष्यन्तश्चिरदुर्गता इव घने दातर्युपर्युद्यते
दातुं वारिवसून्यसूनिव पुरःप्राप्तं परिस्पर्धिनः ।

झञ्झावातविधूतपत्रमुखराः शाखाकरास्फालिनः
　किं वर्षासु परस्परेण कलहायन्ते धरित्रीरुहः ॥ १८ ॥
अस्याङ्के करपट्टभासि चपला श्रीः स्वर्णरेखायते
　धारासारघनं सुदर्शनमदश्चक्रं जगत्पश्यति ।
प्रोदञ्चद्वनमालमञ्जनरुचा देहेन पीताम्बरं
　दूरोन्नीतशिखण्डमण्डलमिदं रूपं हरेरम्बुदः ॥ १९ ॥
एकत्वं न रसैः कयोः समजनि स्त्रीपुंसयोः प्रावृषि
　प्राप्तौ यत्र सनिर्भराविह धराकाशौ चिरादेकताम् ।
योषित्सङ्गमगूढसर्वतरुणः कालोऽयमालोक्यते
　छन्नः क्वापि दिवा युवापि निशया क्रोडीकृतः क्रीडति ॥ २० ॥
　मैथुनभोगोपरतः पयोदमलिनाम्बरावरणः ।
　पामर इव रविरधुना प्रकटं वर्षासु कर्कटं भुङ्क्ते ॥ २१ ॥
म्लानान्नीपतरोरपीपतदिमान्संधिः शरत्प्रावृषो-
　रन्तःकोरकितामहो मधुलिहो जातीमवातीतरत् ।
पुंहंसान्समचीकरत्कृतधियो भाप्येषु वागुद्यमं
　किं केकानिगदं त्वजीगमदतिक्लैब्यं कलापित्रजान् ॥ २२ ॥
　सिंहादवाप्य कन्यां सैंहीमयमाश्रितो वृत्तिम् ।
　विकिरति कैरवमुक्ता घनकरटिघटाविदारणो भानुः ॥ २३ ॥
शुभ्रैरभ्रकुलैः सितं समकृताकाशं सहः कैरवै-
　र्जातीभिर्विपिनश्रियो विकसितैः काशैरियं काश्यपी ।
चञ्चच्चन्द्रमरीचिवीचिभिरिमाः किं च क्षपास्तत्किमु
　क्षुब्धक्षीरसमुद्रमुद्रितहरित्क्रोडे शरत्क्रीडति ॥ २४ ॥
उत्सृज्याम्बुधिजामुखाम्बुजसुखालोकव्रतं यश्चिरा-
　द्देवः सेवितवान्सरोजनयनो निद्रां समुद्राम्भसि ।
सोऽप्युत्तुङ्गभुजङ्गभोगशयनाज्जागर्ति मत्स्योत्सवे
　सोऽयं शारदशीतरोचिषि चमत्कारः कथं कथ्यताम् ॥ २५ ॥

४

जालोद्गतैरुज्जघनोत्कटाततैर्विकाशिकाशैः शितकेशपेशला ।
पुरस्फुरन्नर्तयतीव खञ्जनं शरज्जरद्वारवधूरिवेक्षणम् ॥ २६ ॥

शरदमपसरन्तीं युक्तमेषा सरःश्री-
रनुसरति विनोदान्कौमुदानाददाना ।
उपसरति कराले हन्त हेमन्तकाले
भवति किमिति शालिक्षेत्रपाणिप्रमोदः ॥ २७ ॥

नीचस्त्वमसि तुलायामयमुच्चैः कार्तिकीशशाङ्क इति ।
शरदं काशविकाशादुपाहतरतिं मुमोच मलिनोऽर्कः ॥ २८ ॥

शीतैरुदीतैर्निकृतं निसर्गान्मार्गादपि भ्रंशितमंशुमन्तम् ।
दृष्ट्वा सरो वा रतवासरो वा दैन्ये यदन्वेति न चित्रमेतत् ॥ २९ ॥

नीहारतूलभृतमम्बरमेतदुच्चै-
रासाद्य नाद्य मिहिरो रविरभ्युपैति ।
दीने दिने द्रुतमनेन विनेह शोच्ये
नोच्येत केन तरुणं तिमिरावरोधः ॥ ३० ॥

स्पृष्टं वारि व्यथयति मुहुर्वह्निदाहावशिष्टं
कम्पः कष्टं नटयति वपुर्वादयन्दन्तवाधम् ।
तूलस्थूलावरणविकलं हन्त हेमन्तजाता
वाताः सूचीनिचयवचितप्रायतां प्रापयन्ति ॥ ३१ ॥

वृश्चिकसंदंशवशान्मलिनमुखो जातवेदन इवायम् ।
पौषभिषजोपनीतं वियन्मणिर्मूलमुपभुङ्क्ते ॥ ३२ ॥

निर्गतान्यकुसुमे हिमागमे संनिषेव्य तिलसूनसंपदम् ।
भाविकुन्दमकरन्दबिन्दवे मन्दमन्दमलिवृन्दमञ्चति ॥ ३३ ॥

सोत्कम्पमसिम्छिशिरे शरीरं शङ्कोचितं को न करोति जन्तुः ।
नीहारतूलप्रकरप्रवेशान्निशा परं व्यायतकायमास्ते ॥ ३४ ॥

अध्वन्यानां शिशिरसमये चण्डचाण्डालकाण्ड-
प्रायाः कायानहह पवनाः क्लेशयन्तो विशन्ति ।

बन्धन्त्येते सपदि सुदृशां दुर्भगानामपीह
प्रौढाश्लेषाश्लथितदयितं मूर्ध्नि सौभाग्यपट्टम् ॥ ३५ ॥
निन्दितवह्निरनिन्दितभानुः श्रितसोष्मस्त्रीस्तनगिरिसानुः ।
तूलस्थूलावरणास्तरणः शिशिरं शमयति सम्यक्तरुणः ॥ ३६ ॥
शिशिरेऽनुधावति रिपौ धनुरप्युन्मुच्य भानुरपयातः ।
मकरालयमपि तीर्णः किं भीरुः कुम्भमाविशति ॥ ३७ ॥
आविष्कुर्वन्निव नवनवेनादरेणानुरागं
सर्वाङ्गीणं सुचिरविरहोन्मूर्च्छितायां नलिन्याम् ।
त्रैलोक्यान्धीकरणतिमिरद्वेषरोषारुणत्वं
व्याहुर्वान्ता किमयमुदयत्यम्बरे तिग्मरोचिः ॥ ३८ ॥
इदमनुचितहोतुः कोऽपि होमावसान-
ज्वलदनलमवादीत्कुण्डमाखण्डलस्य ।
मणिघटमभिषेके प्रातरस्योचुरेके
कलितकिरणतोयं मण्डलं चण्डभासः ॥ ३९ ॥
व्यधित विधुमधीनं वल्लभं वारुणीति
स्फुरदरुणितमास्यं तिर्यगावर्तयन्त्याः ।
सुरपतिहरितो यत्कुण्डलं व्यक्तमेकं
तदिदमुचितमूचुर्मण्डलं चण्डभासः ॥ ४० ॥
प्रायः प्राचीप्रमदाभिहतः प्रागचलप्रासादोत्पतितः ।
उदयति रविरतिशोणिमशीलः कुङ्कुमकेसरकन्दुकलीलः ॥ ४१ ॥
सवितरि चिरवैरिण्युत्थिते निष्पतन्तो
भयविचलितपक्षा गोलताप्रान्तरक्षाः ।
मधुकरनिकराणां कैतवादन्धकाराः
प्रियकुलमदसीयं किं सरः संश्रयन्ते ॥ ४२ ॥
विरहेण रवेर्दिनावसाने परिपीतानि विषाणि वारिजिन्यः ।
कमलोदरनिःसरद्द्विरेफव्यपदेशादधुना किमुद्गिरन्ति ॥ ४३ ॥

त्वमन्यहरिदङ्गनाविहरणव्यपेतक्षपः
स्पृशन्नपगतोऽत्रपः किमधुना करैर्मामिति ।
प्रसार्य कमलं करं भ्रमरभाङ्कृतिव्याजतः
समाचरति पद्मिनी किमु रवेरुपालम्भनम् ॥ ४४ ॥

मध्याह्निकैर्मिहिरवह्निकरालकीलैः
काष्ठोत्करादिव परिज्वलतः पतद्भिः ।
अङ्गारकैरिदमपूरि जगत्किमन्य-
त्तेजोऽपि नायनमिहायनमुज्झहाति ॥ ४५ ॥

नीडावैर्विहगैस्तिरोहितगिरो निर्वातनिःस्पन्दना
मध्याह्ने मिहिरातपेन तरवस्तप्ता इवोन्मूर्च्छिताः ।
शोकोन्मादभरेण पादपतितास्तेषां तु जाया इव
च्छायाः संकुचितोपतप्ततनवः क्रोशन्ति झिल्लीरवैः ॥ ४६ ॥

रविरयमभूत्प्रागारूढो नभःशिखरं शनै-
र्झटिति पतति प्रत्यक्सिन्धौ परिस्खलितस्थितिः ।
कथमपि चिरायासादासाद्यते चिरमुच्चकै-
र्विधिरयमधः कर्तुं किंचित्पलं न विलम्बते ॥ ४७ ॥

विधिना विनिपातनाय नीतो रविरस्ताचलमम्बुधावगाधे ।
मुखमुद्रणमम्बुजैरुपेतं प्रणयं के विपदि प्रमाणयन्ति ॥ ४८ ॥

चिरकरपरिमृष्टं भानुबिम्बं दिनान्ते
सकुतुकमिव शोणं कालकापालिकेन ।
चरमशिखरिकण्डान्तस्थलीं नीयमानं
विशति भसितपिण्डं गैरिकैर्लिप्तमेतत् ॥ ४९ ॥

प्राची कलावत्युपयाति कान्ते सायं सपत्नी स्मयतेऽस्मदीया ।
इतीव शोणं सपदि प्रतीची वर्षार्कबिम्बं वदनं पिधत्ते ॥ ५० ॥

संध्यासङ्गपिशङ्गवारिदघटाचञ्चज्जटासंकटा-
दीषद्दर्शितचारुचन्द्रकलिकाहान्तालिकान्तद्युतिः ।

क्वापि क्वापि वनालिनीलिमसमाश्लिष्टारुणाभाष्टदि-
ग्द्वीपित्वक्पटिधूर्जटेर्न हि घटेतैतद्वियत्किं वपुः ॥ ५१ ॥
नक्षत्राली पद्मकुञ्जे मृणाली चक्रेणार्केणार्धभुक्ता विमुक्ता ।
यद्वा संध्यारागसिन्दूरवीथीयुक्ता शुक्तिः किं कलावत्कलेयम् ॥ ५२ ॥
चरमाचलव्यवहितस्य रवेः किरणावशेषमवरोद्धुमिव ।
कथमेकदैव सहसा परितस्तमसा समावव्रतिरे हरितः ॥ ५३ ॥
यान्यासन्वासरश्रीविरचितमिहिरोदारदीपोपविष्टा-
त्संसृष्टा वाक्कपालायितवितनुरियं मीलताकज्जलानि ।
भूमीभाण्डे हरिद्भिर्युवतिभिरभितः पात्यमानानि मन्ये
तान्येतान्येव संप्रत्यविरलतिमिरस्तोमभावं भजन्ति ॥ ५४ ॥
दत्तोऽष्टांशुकवारकाशमभितोऽप्याकाशमाशु ग्रस-
न्नद्वैतं महसामुपाहृतरसां क्ष्मामन्धकूपे क्षिपन् ।
मत्वैतान्यपि तैजसानि सहसा चक्षूंषि मुष्णन्नहो
द्रोहोन्मादमयस्तमिस्रनिचयस्त्रैलोक्यमाक्रामति ॥ ५५ ॥
अधिगगनमनेकास्तारका राज्यभाजः
प्रतिगृहमिह दीपा दर्शयन्ति प्रभुत्वम् ।
दिशि दिशि विलसन्तः सन्ति खद्योतपोताः
सवितरि परिभूते किं न लोकैर्व्यलोकि ॥ ५६ ॥
समुदेति लम्बितालकचुम्बितमिव कैतवात्कलङ्कस्य ।
प्राचीललाटपाटलचन्दनसिन्दूरविन्दुरयमिन्दुः ॥ ५७ ॥
प्राच्याः किं वदनं दिनेशविरहाद्व्यक्ताञ्जनास्रं शशी
कान्दर्पः किमु दर्पणो दिनपरित्यागोन्मिषन्मालिमा ।
किं दैवामृतपाकपात्रमुदितान्तर्बाष्पमुज्जृम्भते
किं वा पञ्जरमभ्रकीयमुदरव्यक्तेन्द्रलीलामृगम् ॥ ५८ ॥
अस्तग्रस्तगभस्तिमत्करततिन्यञ्चीतचञ्चूपुटी
पाटीराद्रिमथो हिमाचलमधः प्रक्षिप्य पक्षद्वयम् ।

पश्चादुन्नतपुच्छपुञ्जमुदयत्प्राचां प्रकाशच्छला-
दण्डं मण्डलमैन्दवं जनयति व्यक्तं बकोटीवियत् ॥ ५९ ॥

निशा सूते सूनुं सपदि सुरतानन्दमिति य-
त्पुरः प्राची दूर्वाचितमकृत पिष्टातकभृतम् ।
तदेतन्नः पात्रं स्फुरति दरसिन्दूरवलितं
शशाङ्केऽयं शोणद्युतिरिति मितिं कोऽपि कुरुते ॥ ६० ॥

दुग्धाब्धेर्नवनीतमन्वहमयं निःसार्य कालः क्रमा-
त्पिण्डं पूर्णतरं व्यधादधिवियद्भाण्डं विधोर्मण्डलम् ।
सान्निध्यं तु यथा यथाम्बरमणेर्वह्नेरिदं नीयते
तत्तापेन तथा तथा द्रववशादासादितं क्षीयते ॥ ६१ ॥

किं यूनां मृगनाभिलिप्तमुद्रुभिः कर्पूरपक्षाक्षरै-
र्व्योमाज्ञापनपत्रमत्र परताशान्त्यै स्मरः प्राहिणोत् ।
अन्तर्लाञ्छनकल्पिता गुरुमषी तन्नामवर्णाङ्किता
यत्रायं घनचन्दनद्रवमयी मुद्रा समुद्रात्मजः ॥ ६२ ॥

उद्भ्रियमायेन्दुकरैरुन्मज्जत्यन्धकारवारिनिधेः ।
क्वापि क्वापि विलग्नच्छायाजम्बालधोरणी धरणी ॥ ६३ ॥

अजनि रजनिरन्या चन्द्रमःकान्तिरन्या
विपुलचपलवीचिव्याचिता काचिदेव ।
सतरुगिरिसरिद्भिः किं हरिद्भिः समेतं
धवलिमनि धरित्रीमण्डलं मग्नमेतत् ॥ ६४ ॥

इति श्रीहरिहरसुभाषिते समयवर्णनप्रकरणम् ॥ ९ ॥

---

शृङ्गारे धनभाजामाजानिक एव मानसो मोदः ।
तस्मान्नृपतिसभायां पठनीयानीदृशानि पद्यानि ॥ १ ॥

संचारं जडिमा गिरं मधुरिमा गण्डस्थलं स्फीतिमा
वक्षोऽपि द्रढिमा त्रिकं च तनिमाप्याक्रान्तमुत्कण्ठते ।

ताटङ्कं निभृतेन धारय जहौ वाल्यावलीभृत्तनुं
वक्तुं वै सममेतदक्षि किमभूत्कर्णान्तिकं गन्तुकम् ॥ २ ॥

काञ्ची कांचिदियं चकार जघनन्यस्ता गतेर्मन्दतां
गाढं बद्धमिदं च कञ्चुकमदादुच्छूनतां वक्षसः ।
नेत्रप्राप्तमथाकुलं कलयति श्रोत्रावतंसद्वयं
तत्कोऽयं वत मत्प्रसाधनविधौ सख्यैषमस्त्वत्क्रमः ॥ ३ ॥

किं परा विनपरापतन्घनाः किं परुन्नरमरुन्नकैतकः ।
मोहरोहणतया भयावहो भाव एष विषमः क्किमैषमः(?) ॥ ४ ॥

सव्रीडस्मितमधुराधरान्तकान्तिर्यत्तिर्यङ्नयनतरङ्गितावतारः ।
जानीमः समजनि यौवनोपदिष्टैर्मुग्धाया मनसि मनोभवाधिवासः ॥ ५ ॥

देवैरुद्भमितोऽङ्गभृन्नजलधेः किं त्वास्यमस्या विधुः
संश्लिष्यैव यदेष मण्डनवशोन्मिश्रान्यमून्युद्गतः ।
कम्बूकण्ठमथामृतं विहसितं शैवालजालं कचा-
न्मुक्ता एव रदात्प्रवालमधरं मीनावुदारे दृशौ ॥ ६ ॥

अजनि शिशिरशीलं शैवलं सागरे य-
च्चिकुरमकृत कामस्तन्वि ते किं न तेन ।
वहति कुटिलमेनं हेतुना केन मूर्धा
वदनविधुरयं चेत्सादरो नादसीयः ॥ ७ ॥

उदयति तलिच्चित्रं मित्रं रतेः कमलद्वयी
कुसुमितनवस्तम्भे रम्भे विधाय तनोरधः ।
तलिति वलति व्योम व्योमाश्रयं च गिरिद्वयं
गिरिपरिसरे कम्बुः कम्बौ कलानिधिमण्डलम् ॥ ८ ॥

जलजकमलकुड्मलौ स्तनौ ते तरुणि तनूसरसो रसोर्मिभाजः ।
स्फुटमियमनयोस्तु नाभिनिम्नस्थितनवनालति बालरोमराजिः ॥ ९ ॥

विधौ वदनकैतवादिह तवातिदीप्तोदिते
स्तनाचलतलादपि स्फुटपलायमाना घना ।

क्रूपाभयवशादिवाविशति रोमराजीमिषा-
दियं तिमिरधोरणी किमु गभीरनाभीह्रदम् ॥ १० ॥

उन्नयति नाभिनिम्नान्मुक्तावलिपाशिरोमराजिनलम् ।
स्मरशरवः स्तनभूधरनिपतत्तरुणाक्षिपक्षिबन्धाय ॥ ११ ॥

हृदाश्लेषोदारः परिमृशतु हारः स्तनतटं
नटत्वेतद्गण्डे कुवलयदृशः कुण्डलमपि ।
स्मितालम्बी संवाहयसि यदि बिम्बाधरदलं
फलं वीटीराग त्वदुपरि न जागर्ति जनुषः ॥ १२ ॥

चित्रं तरुणिमराज्ये समाश्रिता बलिभिरप्यबला ।
किमपरमुरोजशंभुर्जीवातुर्जायते मनोजस्य ॥ १३ ॥

विसर्पत्कालिन्दीलहरिपरिपाटीपरिमृशा
दृशा दीर्घापाङ्गक्रमणरमणीयं वलितया ।
निरुन्मीलो निलोत्पलदलकलापैर्न कतिधा
सुधास्निग्धासारस्नपित इव सद्यः समभवम् ॥ १४ ॥

प्रियेक्षितायाः पतिनेत्रपातस्त्रपाभरैर्दूरमपाकृतोऽस्याः ।
रोमाङ्कुरो रङ्कुविलोचनायाः कपोलयोः केन निवारणीयः ॥ १५ ॥

स्मितमधुरमेत्य निभृतं जनयति यूनोः परस्परप्रणयम् ।
दूती दृगेव चतुरा परा तु शङ्काकलङ्काय ॥ १६ ॥

अन्य इत्यनुपयातयन्त्रणं द्रागुदञ्चितवती विलोचनम् ।
मामवेत्य चकितावृतानना दन्तदष्टरसना मनागभूत् ॥ १७ ॥

प्रतिनवपुलकाली मण्डिता गण्डपाली
निगदति विनिगूढानन्दहिन्दोलि चेतः ।
सुदति वदति पुण्यैः कस्य धन्यैर्मनोज-
प्रसरमसकृदेतच्चापलं लोचनस्य ॥ १८ ॥

क्षौमेण स्तनतुङ्गमङ्गलघटावाच्छाद्य माद्यत्तरा
सद्यः प्राप्तचिरानवाप्तविषयं यद्गेयमुद्गायसि ।

तत्प्रायः परिणीय कामपि रतिं प्राग्जन्मपुण्यार्जिता-
मद्यालम्भि कुतोऽपि तन्वि कुतुकागारे स्मरेणोत्सवः ॥ १९ ॥

नैशं किमाचरति वासर एव हृद्यं
नृत्यन्निवैष करभोरु करस्त्वदीयः ।
स्मेरं सरोजमुखि वञ्जुलकुञ्जपाली-
मालीमिव त्वमनुपश्यति कस्य हेतोः ॥ २० ॥

तव तन्वि तरुणपुण्यादम्बरमणिमकरसंक्रमो जातः ।
अधिवेलि भवति नियमः फलमविलम्बेन कामस्य ॥ २१ ॥

कालीयैः कुचकाञ्चनाचलचमत्कारः किमुत्सार्यते
कीदृक्कुङ्कुमकेसरत्विषि मुखे कस्तूरिकालेपनम् ।
स्फीतेऽस्मिञ्जघने सरोजवहने किं नीलचोलार्पणं
कस्मै साहसिनि त्वमिच्छसि विधेर्विन्यासमन्यादृशम् ॥ २२ ॥

भ्रातः कङ्कण किं कदाप्यसि मयाश्लेषेषु विश्लेषितं
मातः किङ्किणि किं कृता क्वचिदपि त्वं सौरते दूरतः ।
किं मञ्जीर बहिःकृतोऽप्यसि रहस्ताताङ्घ्रिपङ्केरुहा-
त्संकेताध्वनि बद्धवैरमिव यन्मौखर्यमभ्यस्यथ ॥ २३ ॥

सविलम्बे वनमालिन्यविलोकनविक्लवस्य नयनस्य ।
अपि केलिगेहदेहलि केवलमवम्बनं त्वमसि ॥ २४ ॥

केलीसद्मनि पद्मसुन्दरमुखी मन्दाक्षमन्देक्षितं
संप्राप्तेति समीक्ष्य निर्भरतराविर्भूतचेतोभुवा ।
प्रत्युद्गम्य जवादवारितघनाश्लेषालसात्प्रेयसा
पर्यङ्कोपरि कार्यते सुकृतिना पादार्पणानुग्रहम् ॥ २५ ॥

लज्जां संमलितामुपेयुषि मयि व्याधूय कम्पच्छला-
त्सद्यः स्वेदमिषाद्व्यधायि सुदृशा धैर्याय वार्यञ्जलिः ।
भूयो मास्तु वियोगवैशसमिति प्रत्यङ्गमालिङ्गने
मद्गात्रप्रथनोचिता विरचिता रोमाङ्कुरश्रेणयः ॥ २६ ॥

तन्व्या तल्पमुपेयुषि प्रियतमे सव्रीडया निर्गतं
सख्येति त्रपयापि केलिभवनादेवापयातं बहिः।
गाढाश्लेषनिपीडनान्निपतितामालोक्य हारावलीं
स्थातुं हन्त भिया क्षणं निविलया नीव्यापि न व्यापृतम्॥ २७॥

विश्लेषज्वरवेदनासहनयोः कारुण्यकीर्णात्मना
क्वापि प्रापितयोः समागमसुखं यूनोर्मनोजन्मना।
नैरन्तर्यनिवेदितात्मविशिखव्याजेन सूचीचयैः
संस्यूते वपुषी परस्परगुणैरेकात्मतामापतुः॥ २८॥

अविरतविरुतकपोतीमर्पितरसमावृणोति घनवलनः।
नवलतिकामतिकातर तरलितमुदिरद्वयीं मुदिरः(?)॥ २९॥

पयोवाहारूढा नटति कदलीकाण्डयुगली
तलित्तत्र न्यञ्चत्तटिनि घटयुग्मं नटयति।
नयत्यम्भोजन्मन्यमृतमकरन्दौ विनिमय-
न्महच्चित्रं चञ्चत्तिमिरपरिवेषो हिमकरः॥ ३०॥

पर्याप्ते सुरते विकीर्णचिकुरोद्गीर्णे प्रसूने पुरः
प्रक्षिप्ते कुचकञ्चुके क्वचिदपव्यस्ते च हारे हृदः।
स्रस्ते लूनगुणे नितम्बवसने भग्ने च दोःकङ्कणे
प्रत्येकं निपतन्ति पङ्कजदृशो दैन्यस्पृशो दृष्टयः॥ ३१॥

नीरागेऽधरपल्लवे कृतवती ताम्बूलरागार्पणं
प्राप्ते निर्गुणतां चकार चिकुरे निर्बन्धतो बन्धनम्।
निर्वेदात्सुरतावसानसुलभान्निर्गन्तुकामं हृदः
कन्दर्पं कृपणा रुणद्धि निविलत्यस्ताञ्चलव्याजतः॥ ३२॥

नीव्यां संयमनं कचे नियमनं श्रोणीतले चासनं
निःश्वासाभ्यसनं मुखे समभवत्प्रत्याहृतिर्भूषणे।
ध्यानं प्रेमणि धारणा स्तनतटे तन्व्याः समाधिः प्रिये
निर्वेदादिव किं रतान्तसुलभात्सर्वाङ्गयोगोत्सवः॥ ३३॥

तन्वी स्मारानलाङ्गारान्निर्वाणप्रायतां गतान् ।
प्रदीपयति किं कान्ते रतिश्रातेऽञ्चलानिलैः ॥ ३४ ॥

स्मरसमरपरिश्रमप्रसुप्तं मिथुनमपेतदयः प्रतिप्रतीकम् ।
परिमृशति निशावसानवातः प्रकटितमन्मथपक्षपक्षपातः ॥ ३५ ॥

जालान्तरालमालोक्य बालारुणकरारुणम् ।
शयितं दयितं प्रातः कातराक्षी निरीक्षते ॥ ३६ ॥

पर्यङ्कात्सहसावतीर्य विहिता नीवीनवीनस्थितिः
संरुद्धा कबरी कथंचन कुचाभोगोऽञ्चलेनावृतः ।
द्वारस्तम्भतले निलीय निभृतं प्रायस्त्रपाकातरं
दूरादुन्नमिताननार्धमसकृत्तन्व्या बहिर्वीक्ष्यते ॥ ३७ ॥

अङ्गाकृष्टिर्व्यथयति नखाङ्केषु वक्षोजकुम्भा-
वास्यं जृम्भा दशनवसने दन्तदष्टं दुनोति ।
यान्त्याः खेदं व्रजति करजश्रेणिषु श्रोणिभागः
प्रातर्याति प्रगुणतरतां वैशनं नैशमस्याः ॥ ३८ ॥

श्रमान्नामान्यस्या मयि निगदतीन्दीवरदृशः
श्रयन्मन्यौ नव्ये नयनमपसव्येन वलितम् ।
प्रणीयास्त्रं धौताञ्जनमहह बन्धूचितमदा-
द्विपन्नाय प्रेम्णे सपदि तिलतोयाञ्जलिमिव ॥ ३९ ॥

धन्याहमस्मि यदि नाथ मयापि नाम
तस्या निकामसुभगं सुकृतैरलम्भि ।
कुर्यामनीदृगतिवारिधुरा कथं ते
शान्तिं मनागपरथा विरहव्यथायाः ॥ ४० ॥

प्रतिरुद्धेव प्रेम्णा कुपितेन बहिः···· कृष्यमाणेव ।
अधिकेलिगेहदेहलि बाला दोलायते कृतिनः ॥ ४१ ॥

कुतस्ते देहलीस्तम्भ संभवस्तपसामयम् ।
कोपना मामनादृत्य यत्त्वां बालावलम्बते ॥ ४२ ॥

मानं मानिनि मा विमुञ्च विदुषि ब्रूयाः क एष क्रमो
यद्रागः श्रुतिगामिनोर्नयनयोरेतादृशो दृश्यते ।
किं चान्यत्कुचशंभुसेवनपरे बन्धः कथं कञ्चुके
काञ्चीसंनिधिसंगतापि लभते नीवी न मुक्तिं कुतः ॥ ४३ ॥
प्रतिषिद्धनखेन्दुसङ्गयोश्चिरमुत्सारितहारसङ्गयोः ।
किमुदेति न शंभुशोभयोः स्तनयोरप्यनयोरनुग्रहः ॥ ४४ ॥
तव गुरुतरापराधादपि बाधा गोपकोपना कुत्र ।
नितरामितरासु परं गणिता वनितासु वहति परितापम् ॥ ४५ ॥
निखिलं गोकुलभूषण ·········मतिनिर्भरानुरागस्य ।
त्वयि सरुषं यत्परुषं पल्लवयति बल्लवी वचनम् ॥ ४६ ॥

इति श्रीहरिहरसुभाषिते शृङ्गारवर्णनप्रकरणम् ॥ ९ ॥

---

नायकनायिकयोरपि भेदा वर्ण्याः पुरो नृपतेः ।
तत्तदुदाहरणेभ्यो लक्षणमवसेयमेतेषाम् ॥ १ ॥
पतिरुपपतिश्च वैशिक इति त्रयो नायकाः कथिताः ।
एतेषां कथ्यन्ते क्रमादुदाहरणपद्यानि ॥ २ ॥
दातुं जातु पदाङ्गुलीमपि बहिस्तल्पादकल्पार्णवे
तल्पे स्थापयितुं भुजङ्गरचिते नैवोचितेयं प्रिया ।
इत्यालोच्य निरस्तकौस्तुभमधः प्रक्षिप्य हारं हरि-
र्लक्ष्मीं वक्षसि कामकातरतया संधारयन्पातु वः ॥ ३ ॥
किं दुर्जनान्न हि बिभेषि यदेषि पार्श्वं
मा मेति भीतिपरुषं परिवर्जयन्त्याः ।
संत्यक्तसाध्वसभरं परिरभ्य दोर्भ्यां
बिम्बाधरं धयति धन्यतमः प्रियायाः ॥ ४ ॥
नीता भवेत्क्वचन केनचिदेव यूना
किं गेह एव रमते तरुणान्तरेण ।

इत्याकुलं द्रविणपाणिरुपेत्य कामी
द्वारान्तिकं चकितमञ्चति वारवध्वा ॥ ५ ॥

एतेषामनुकूलो दक्षिणधृष्टौ शठश्चेति ।
भेदचतुष्टयमेषां वदाम्युदाहरणमेकैकम् ॥ ६ ॥

नेष्यामि हा कथमरण्यदरीषु सीतां
तामन्तरा क्व पुनरक्षिपुटं क्षिपामि ।
इत्थं वधूं विपिनसार्थचरीं विधातुं
गेहे निधातुमपि रोदिति रामचन्द्रः ॥ ७ ॥

मान्या कुन्तिनभूरभूदसुभगा कुत्राथ सात्राजिती
वैषम्यस्य कथापि मे धरणिभृत्कन्यासु नान्यास्वपि ।
इत्थं दित्सति पारिजातकुसुमं संदेहदोलायिते
भूयः पश्यति नारदस्य वदनं देवे भवेन्मे मतिः ॥ ८ ॥

नीत्वान्यत्र निशामुपेत्य सुदृशो बाष्पाम्भसा स्नापिते
वीक्ष्यात्मप्रतिमां कपोलफलके संभोगचिह्नाङ्किताम् ।
मूर्धालक्तकमानतश्चरणयोश्चुम्बन्बलादाननं
धृष्टः स्वाधरपल्लवाञ्जनमपि प्रच्छादयन्प्रोञ्छति ॥ ९ ॥

चुम्बति कपोलपालीमलीकसौभाग्यमेकस्याः ।
तत्प्रतिबिम्बितमाननमन्यस्याः स्मेरतां नयति ॥ १० ॥

भेदास्त्वेषां शतशो विमुग्धमध्यप्रगल्भाद्याः ।
प्रायेण तेऽपि कुशलैरुन्नेया नायिकाभेदैः ॥ ११ ॥

अथ नायिकाप्रभेदास्तत्र नवोढानवोढविश्रब्धा ।
मध्या तदनु प्रौढा तासामग्रे क्रमादुदाहरणम् ॥ १२ ॥

दृशं दूरात्पत्युः परिहरति किं श्रोष्यति वच-
स्तदासन्नं सद्म त्यजति किमुपायास्यति रहः ।
तदीयं नामापि श्रुतिपथमुपेतं न सहते
नवोढा निर्व्यूढामिह विमतिमुन्मुञ्चतु कुतः ॥ १३ ॥

५

सखीभिरुपनीतया करनिगूढनीवीपदं
प्रसुप्तमचिरोढया शयनसीम्नि पर्यङ्कुखम् ।
तदङ्गपरिवर्तनं सुरतसङ्गसंनर्तनं
स्मरप्रणयमन्त्रिणा सुकृतिना परं प्राप्यते ॥ १४ ॥

मयि प्रणयचञ्चलं रुचिरमञ्चयत्यञ्चलं
स्खलन्निबिडनीविकानियमितैकपाण्यम्बुजम् ।
परेण बत पाणिना युगपदेव गण्डाधर-
स्तनावरणलुब्धया व्यवसितं न किं लुब्धया ॥ १५ ॥

सीत्कारः कथमेष भाविनि भवद्दन्तव्रणैरुल्बणै-
र्वक्रं दर्शय दर्शयामि कितव प्रौढापराधं तव ।
इत्युद्वीक्षितुमुन्नमय्य वदनं द्राक्चुम्बतो राधया
गोविन्दस्य कराञ्चलेन चिबुकप्रान्ते प्रहारोऽर्पितः ॥ १६ ॥

आसामपि प्रभेदाः प्रथमामुन्मुच्य कथ्यन्ते ।
धीराधीरा मिश्रा क्रमेण कियदप्युदाहरणमासाम् ॥ १७ ॥

साकूतस्मितमेव नाधरपुटीसीमानमुल्लङ्घते
किं वाणी हरिणीदृशः सहचरीश्रोत्रात्परत्राञ्चतु ।
केलीमन्दिरमध्यमागतमपि द्राक्प्राप्नुवन्ति प्रियं
प्राक्पुण्येन शिरोऽवगुण्ठनपटप्रान्तार्धरुद्धा दृशः ॥ १८ ॥

मधुरिपुरुपयातीत्येवमुक्ते कयाचि-
च्चकितवलितवक्त्राम्भोरुहं राधिकायाः ।
समुदयति समन्तात्कज्जलोन्मज्जदञ्च-
त्कुवलयदलदामश्यामला लोचनश्रीः ॥ १९ ॥

निभृतेक्षितैकताना मयि चिरमासीद्विदूरमासीने ।
प्रतिनेत्रोपनिपाते स्मितमधरमधोमुखी स्थिता सुमुखी ॥ २० ॥

आसामपि प्रभेदास्त्रयः स्वकीया च परकीया ।
सामान्या चेत्यासां वदाम्युदाहरणमेकदेशेन ॥ २१ ॥

परिरभ्य प्रियं प्रेमप्रसारिपुलकाङ्कुरा ।
निःसाध्वसा सुखं साध्वी निशां नयति नायिका ॥ २२ ॥

सातङ्कवारितनखाङ्कमसोढदन्त-
संपातमात्महृदयादपि शङ्कमाना ।
येनार्यते(?) हमिति ते तरुणान्तराय
तस्मै नमः स्मरणजन्मशरासनाय ॥ २३ ॥

श्रीमन्तं समुपेतमन्तिकमनुप्रेक्ष्यादरादुत्थिता
हस्तन्यस्तधनं प्रवेशितवती बद्धोत्सवं सद्मनि ।
सद्यः स्रस्तशिरोवगुण्ठनपटं प्रव्यक्तवक्षःपटं
पर्यङ्के परिरभ्य नागरजनं वाराङ्गना रोहति ॥ २४ ॥

तासामष्टौ भेदाः प्रोषितपतिकाथ खण्डिता तद्वत् ।
कलहान्तरिता च तथाभिसारिका विप्रलब्धा च ॥ २५ ॥
उत्कण्ठिता च वासकसज्जा स्वाधीनभर्तृका चेति ।
उच्यन्ते संक्षेपादेताः कैश्चित्क्रमादुदाहरणैः ॥ २६ ॥

संतप्तं वपुरेतदुज्झितमिव स्पन्देन संलक्ष्यते
विक्षिप्तं भुजमुन्मुमोच वलयश्रेणीयमेणीदृशः ।
तत्याजास्यमपास्तहास्यविवशं वाक्प्रेयसी प्रोषिते
प्रस्थातुं परिरभ्य कण्ठमहह प्राणैः परं स्थीयते ॥ २७ ॥

निःश्वासेन ममाधरादपहृतो रागस्तवान्यस्त्रिया
दीर्णं तन्नखरैश्च तावकमुरस्त्वद्वेष्टितैर्मामकम् ।
शोणं जागरणेन ते मम पुनस्त्वद्वीक्षणेनेक्षणं
सर्वत्रास्मि समा तथापि विषमामाख्याय मां भ्राम्यसि ॥ २८ ॥

कोपिन्याः कतिधा व्यधायि न पदप्रान्तानतिः प्रेयसा
कुत्रासीदिह जातु जन्मनि पुनः सद्भावसंभावना ।
तस्मिन्नेत्रपथादथापसरति प्रान्तानुतापज्वराः
सद्यः साश्रुझराः पतन्त्यनुचरीवक्त्रारविन्दे दृशः ॥ २९ ॥

स्वापश्वासपरम्परां परिजनस्योवाच कर्णद्वयी
नेत्राभ्यामपि दर्शिता गुरुतमस्तोमावली देहली ।
पाणिभ्यां निभृतेन नूपुरमपाचक्रे पदाम्भोजयोः
संकेतोद्यमसंभ्रमे वरतनोरासीन्मनोऽग्रेसरम् ॥ ३० ॥

समुपेता संकेतादलुलितसकलप्रसाधना सुमुखी ।
अवचनमेव ब्रूते श्वसितेन सखीषु विप्रलब्धत्वम् ॥ ३१ ॥

वनमालिनि सविलम्बे वितर्कशतकर्कशान्मनसः ।
हतया धीरतया मे चिर....सर्योपि निर्यातम् ॥ ३२ ॥

मुहुरपि बाधयति तल्पं पुनराकल्पं परामृशति ।
अधिकेलिगेहदेहलि विन्यस्तविलोचना सुतनुः ॥ ३३ ॥

परिरम्भणैश्चिरनिरन्तरिताः पुलकाङ्कुरैः किमपि दन्तुरिताः ।
परिचुम्बनैस्तरलिताः शतशः सुखमासते सुकृतिनां सुदृशः ॥ ३४ ॥

सप्तैकद्वयभेदास्तासामेवं सुहृद्भिरवसेयाः ।
एभ्यः पुनरपि शिष्टान्ब्रूमो भेदान्महद्भिरुपदिष्टान् ॥ ३५ ॥

अन्योपभोगकलुषा मानवती प्रेमगर्विता मुदिता ।
सौन्दर्यगर्विता च प्रेमपराधीनमानसानूढा ॥ ३६ ॥

संगोपितसुरताथ क्रियाविदग्धा च वाग्विदग्धा च ।
कापि प्रोष्यत्पतिकानुशयाना लक्षिता कुलटा ॥ ३७ ॥

स्यादुत्तमा च मध्या तथाधमा चेति सप्तदश ।
एता उदाह्रियन्ते भेदास्त्वासां सुहृद्भिरुन्नेयाः ॥ ३८ ॥

अनुशयवत्येवोक्ता प्रोष्यत्पतिका न भेदतो बहुभिः ।
परदेशादागच्छत्पतिकापि यथा प्रमुदितैव ॥ ३९ ॥

सहचरि कियत्प्रेयः प्राप्तौ सुखं न स दर्शितः
परुषमथ वा संदष्टौष्ठं न किं समुदीरितः ।
सुहृदयबहिर्भावासत्वं मयेव कृतं त्वया
तदननुनयं किं वा कुर्याः स एव गतत्रपः ॥ ४० ॥

सबाष्पव्यालापं प्रसरदनुतापं प्रियतमे
समासन्ने साम्ना बहु सहचरीभिर्व्यवहृतम् ।
सनिःश्वासं शून्याहितनयनमस्मेरवदनं
निविष्टाया मानः किमजनि कृशः पङ्कजदृशः ॥ ४१ ॥

सहचरि विरम ग्रथनान्मम कथनादस्य हारस्य ।
अस्मिन्नुरसि विनिहिते विरहित इव भूयते दयितः ॥ ४२ ॥

कर्णे कान्तागमनवचनाश्राविणि स्वर्णभूषां
तस्यादर्शिन्यकृत नयने श्यामिकामञ्जनेन ।
स्थाप्यः कुत्र प्रिय इति परामृश्य हारावृताङ्के
हृत्पर्यङ्के पुलकपटलीतूलिकामास्तृणोति ॥ ४३ ॥

सरसि न विहरन्ति किं तरुण्यः सखि कथमेष मयैव दैवदोषः ।
मुखमिदमवलोक्य चक्रयूनामुदयति सायमिवायमर्तनादः ॥ ४४ ॥

हितमभिहितं दीना वाचो वदन्बहु पादयोः
पतति नियतं मानावेशे वशो भवति प्रियः ।
सहचरि समाक्रान्तं प्रेम्णा परं तु चिरान्मनः
क्व नु बत पुनर्मानस्यास्मिन्मनागपि संक्रमः ॥ ४५ ॥

आलि कपालिनि जटिले पत्यावत्याग्रहैस्तवालमिति ।
हरगतमिति दुःसहमपि मुहुरपि मुखरान्निगादयति गौरी ॥ ४६ ॥

हंसैः शैवलमञ्जरीति कबरी चञ्चूभिराकर्षिता
वक्रे चन्द्रधिया चकार कुपिता चक्री नखैराक्रमम् ।
भृङ्गैः पङ्कजकोरकप्रतिभया वक्षोरुहो विक्षत-
स्तन्मातः करवै पुनर्न सरसीतोयावगाहोद्यमम् ॥ ४७ ॥

ग्रामतरुणस्य जाया सायाह्नसमागतेषु पथिकेषु ।
आसन्नविजनवटतटमावासस्थानमुपदिशति ॥ ४८ ॥

एकाकिन्या मम गृहमिदं यामिको मामकोऽन्धः
का मे नोदेत्यहह मनसस्तस्करेणात्र भीतिः ।

दैवेनैवं यदि न सुखितः स्याः श्रमेण प्रसुप्तः
पान्थ ब्रूमः किमिह सदृशो नैष नैशो निवासः ॥ ४९ ॥

मारोदीः क्षणमेव रोदिमि कुरु प्रस्थास्यतो मङ्गलं
सम्यक्पाकमयं प्रयास्यति सखि श्वासानिलः प्रेयसा ।
प्राणांस्थापय तत्र कः प्रभवतु प्राणेश्वरे प्रस्थिते
चेतः स्तम्भय हन्त दैवहतकं क्वागादिदं वेद कः ॥ ५० ॥

स्वयमेव सद्म तक्रे स्वशिरसि विक्रेतुमम्बया निहिते ।
सोद्वेगगमनपराधामपि बाधा सहचरीं शपति ॥ ५१ ॥

पूर्वस्मादधिकाधिकादरमिदं श्वश्रूषु शुश्रूषणं
भिन्नोऽयं परिचारिकासु विपुलाह्लादः प्रसादक्रमः ।
अद्यान्यः प्रतिवेशिनीषु भवनाचारौचितीसंभ्रम-
स्तत्किं केनचिदेणशावकदृशः प्रेमा समालक्षितः ॥ ५२ ॥

नाभूद्भूमिरियं सदैव सकला संकेतशय्यामयी
सर्वोऽप्येष वभूव नैव समयः प्रावृट्तमिस्रामयः ।
सृष्टिः प्रोन्मदपुंमयी न विदधे दुश्चेतसा वेधसा
मातस्तात कथं घटेत कुलटेत्यस्मादृशीनां यशः ॥ ५३ ॥

कोपः समुत्पन्नविनष्ट एव स्वान्तं प्रियप्रेमनिविष्टमेव ।
त्रासस्तदस्मेरनिमेष एव क्रमः कुलीनस्त्रिय एष एव ॥ ५४ ॥

एकतः प्रणयपीडनं मुधा मानधारणरसादरोऽन्यतः ।
रक्षती द्वयमिदं मनस्विनी निर्वृणोतु कथमत्र जन्मनि ॥ ५५ ॥

प्रकल्प्यापि प्रेयःस्खलितमनिशं मानविधुरा
तरामास्ते वामा दिवसहिमधामायितमुखी ।
चिरं पादप्रान्ते निपततु परं प्राणदयितो
हतोत्साहं साहंकृतिकुपितमुन्मुञ्चतु कुतः ॥ ५६ ॥

इति श्रीहरिहरसुभाषिते नायकनायिकाभेदप्रकरणम् ॥ १० ॥

---

सभ्यानामनुरागं समीहमानः प्रसङ्गपतितानि ।
पद्यानि पठेन्नानाविधानि विबुधादिविषयाणि ॥ १ ॥

सामगीतमपनीतगोचरं धाम तामरसलोचनं भजे ।
मूर्ध्नि यच्चरणवारि धारयन्धूर्जटिर्नटति पर्यटन्मुहुः ॥ २ ॥

लम्बालकं तदालम्बे जम्बालकलुषं मुखम् ।
दृष्टं व्यादाय विस्पष्टं मात्रा यत्राखिलं जगत् ॥ ३ ॥

वृन्दारण्यविभूतिभूतलपुषां देवद्विषामायुषां
शेषं शेषशिरश्चिरायितधराभारावताराजिरम् ।
नन्दानन्दलतालवालमनिशोन्मादं यशोदामुदा-
माभीरीनयनाञ्जनं किमपि तत्कैशोरमैशं नुमः ॥ ४ ॥

कुत्रासीस्त्वमिति यशोदया सरोषं संरुद्धे तनयधियान्तरङ्ग एव ।
कालिन्दीपयसि पलायितस्य विष्णोरुत्तालं हसितमलंकरोतु चेतः ॥ ५ ॥

त्वं चिरोपचितरोषलक्षणं किं करोषि यमकिङ्करेक्षणम् ।
नन्दमन्दिरविसारिवारिदश्यामलं मदवलम्बनं महः ॥ ६ ॥

स्वं संभाव्य यदङ्घ्रिवारि सरिदस्पर्शेन शोच्यं शिवः
संभोगप्रतिकूलमप्यचलभूरर्घं सरारेरभूत् ।
निर्माल्यप्रणयावशेन मनसा यस्याङ्गतो निर्गतं
चक्रे मन्दिरमम्बुजन्म जगतां धाता····सयास्तु वः ॥ ७ ॥

पीयतामुदधिमन्थनोद्धृतं सादरैस्तदमरैः किलामृतम् ।
कालकूटकवलस्य काटवं सोढुमीश्वरमृते न पाटवम् ॥ ८ ॥

संविभर्तु भुजगेश्वरं गले भस्म लिम्पतु कलेवरे हरः ।
वंभ्रमीतु वृषभेण कः परः पार्वतीप्रणयसुन्दरः सुरः ॥ ९ ॥

प्रभवतु भुवनानां निग्रहेऽनुग्रहे वा
ननु कलयतु देवो नानुकारं हरस्य ।
निविशति शशिलेखा किं किरीटे परेषा-
महह वहति कस्य स्वर्धुनी मूर्धनीयम् ॥ १० ॥

धौताः स्वर्धुनि मूर्धजास्तव जलैर्जाता जटाजूटता
स्नातं वारिणि भस्मधूसरमभूदङ्गं क एष क्रमः ।
किंचान्यत्परिमार्जनेन पयसो भालेऽनलेनोत्थितं
निष्पीतेऽम्बुनि कण्ठ एव गरलज्वालाकुलः क्लाम्यति ॥ ११ ॥

यस्य यस्य तव जातशीकरः स्वस्तरङ्गिणि शिरोऽधिरोहति ।
तेन तेन चरणोदकीकृता मोदमञ्चसि क एष विभ्रमः ॥ १२ ॥

त्रिजगति नगरीणां रीतिराजानकीयं
भवति नृपतिरेकः सन्तु पौराः सहस्रम् ।
इह पुरहरपुर्यामस्तमर्यादितेयं
दिवसमपि निवासी यः स काशीनरेशः ॥ १३ ॥

शैलाः सन्तु शतं सुमेरुहिमभृन्मैनाकविन्ध्यादयः
किं त्वेषां महिमावधारणविधौ गोवर्धनो वर्धते ।
सप्ताहानि मुरारिपाणिकमलक्रोडोपरि क्रीडता
येन क्ष्माधरलक्षपक्षदलनः शक्रोऽप्यनुक्रोशितः ॥ १४ ॥

अहो महीयसां पुंसामुपर्युपरि पौरुषम् ।
रामेणाजगवं शम्भोर्भग्नमम्भोजनालवत् ॥ १५ ॥

स्पर्धामर्धाङ्गिन्याः कान्या कर्त्री गिरीन्द्रनन्दिन्याः ।
सा तदपि जह्नुकन्या मूर्धन्या धूर्जटेर्जयति ॥ १६ ॥

तुल्यं गाधिसुतेन वन्दितमहो पातुं सहैतद्गिरा
गाढे किं च गुणे समं सुजनुषा सद्यः समायोजितम् ।
वैदेहीहृदयेन दाशरथिना द्राक्साकमाकर्षितं
भग्नं भूमिभुजां भुजाकुलमदैः सार्धं स्मरारेर्धनुः ॥ १७ ॥

वत्से वेत्सि कुलं त्वमेव किलये शुश्रूषणं लक्ष्मणे
जानात्याचरितं विपत्तिविधुरे पत्यावपि त्वादृशी ।
विन्ध्यारण्यचरी चिराय शबरीमुख्यं विदध्या इति
ध्यातुं वक्तुममज्जि लोचनपयःकुल्यासु कौशल्यया ॥ १८ ॥

यदेतन्मे चेतः कनकहरिणेनाहृतमभू-
न्मम त्रासाक्रन्दे त्वमपि बत संदेहमकरोः ।
हृता सीता दैन्यान्यकृत नियतं हारिणि खले
कुले कुत्सा वत्साजनि चिरमियं चण्डमहसः ॥ १९ ॥

बाणान्वारिकणान्किरन्नवतलित्संजातसिञ्जागुणं
वा····कार्मुकमेतदैन्द्रमधुना संधाय किं धावसि ।
किं संपाद्यकदम्बकुड्मलकुलैर्दावानलैर्दुर्दिनं
वैदेहीविरहेऽपि जीवितभृतो रामस्य किं दुःसहम् ॥ २० ॥

हे हे का दयिते दशां परवशा केकाभिरेकाकिनी
व्योमव्यापिनि कोपिनि प्रमुदिते पाथोधरे प्राप्स्यसि ।
मिथ्यावेत्थमशङ्कि जीवितमसि त्वं रामभद्रस्य मे
देवि स्याः सहनक्षमा न विपदः कस्याः क्षमानन्दिनि ॥ २१ ॥

अत्यन्तव्यवधानलब्धजनुषो जात्यापि भिन्नक्रमाः
सांनिध्यं विधिना कुतूहलवता कुत्रापि संप्रापिताः ।
गच्छन्त्या मरणं गुणव्यतिकृता भेदं न भूमीरुह-
स्ते काष्ठामपि निष्ठुरा गुणगणैर्येऽनेकतां प्रापिताः ॥ २२ ॥

गुणगौरवमेव गाहमानाः कृतिनः किं गणयन्ति दूषणानि ।
न जहाति विहारि नक्रचक्रं बत रत्नाकरवारि दानवारिः ॥ २३ ॥

विप्रियमप्याकर्ण्य ब्रूते प्रियमेव सर्वतः सुजनः ।
क्षारं पिबति पयोधेर्वर्षत्यम्भोधरो मधुरमम्भः ॥ २४ ॥

उत्कर्षवान्निजगुणो यथा यथा याति कर्णमन्यस्य ।
धनुरिव सुवंशजन्मा तथा तथा सज्जनो नमति ॥ २५ ॥

म्लायसि परनिःश्वसितैः स्वच्छतया कं निवेशयसि नान्तः ।
अयसा त्वन्निर्माता मुहुरविधाताप्ययोमयो भवति ॥ २६ ॥

आसीत्कल्पमुदम्बुदम्बुनि चिरं भेजे च भालानलं
भर्ग्यस्य प्रतिमासकर्म हुतभुक्कुण्डेऽप्यहोषीद्वपुः ।

तीव्रैरेव तपोभिरिन्दुरकरोदित्थं जनुर्जापनं
किं कुर्याद्विधुरो न वाञ्छति विधिस्तल्लाञ्छनप्रोञ्छनम् ॥ २७ ॥
क्षीणः क्षीणः क्षपयसि निशाः पूर्णतायां पुनस्ते
राहोरास्ते भयमयमपि स्वान्तशल्यं कलङ्कः ।
एतास्वापत्स्वपि हिमरुचे त्वां विनोल्लासलोलं
कोऽलं कुर्यात्सपदि सकलं भूतलं भाभिरामिः ॥ २८ ॥
अपि दोर्भ्यां परिरब्धा बद्धापि गुणैरनेकधा निपुणैः ।
निर्गच्छति क्षणादिव जलधिजलोत्पातिपिच्छिता(त्पातपिच्छला)लक्ष्मीः॥
कस्य करान्न स्खलिता नीरविधिक्लेदपिच्छिला लक्ष्मीः ।
भृगुचरणधूलिपरुषे हृदि परिरब्धा हरेः स्थिरेयमभूत् ॥ ३० ॥
धत्ते वक्षसि कौस्तुभोपलमयं मत्वा श्रियः सोदरं
तन्नाभीगृहमाकलय्य मकरावासं मनाङ्नोज्झति ।
तन्नामप्रणयान्न लुम्पति हरिः श्रीवत्समङ्के स्थितं
किं केन क्रियतां स एव यदभूदेवंदशः स्त्रीवशः ॥ ३१ ॥
अपारे पाथोधौ किमिति सतिमिग्राहगहने
निलीय श्रीनाथः स्वपिति भुजगे शङ्कित इव ।
किमेतावद्भिर्वा भवतु किल सर्वातिशयितः
प्रियासंश्लिष्टाङ्को व्यपगतभयं को निवसतु ॥ ३२ ॥
लक्ष्मीजनयितुर्जाताः कियन्तो जलजन्तवः ।
स्वत्रासप्रार्थनापात्रं सोदरोऽस्याः सुरद्रुमः ॥ ३३ ॥
येषामेकतरेण केनचिदपि प्राप्तेन पर्युत्सुको
मर्यादामवसाद्य माद्यति जनः क्षोणीमपि क्षोभयन् ।
वीचीभिर्विलुठन्ति तानि परितो रत्नानि वारांनिधे-
र्नायं प्राक्प्रकृतिं जहाति महतां वित्तैर्विकारः कुतः ॥ ३४ ॥
एकोऽम्बुधिर्जगति जीवति येन तानि
तावन्ति हन्त सलिलानि समुच्चितानि ।

येभ्यः कथंचिदपि किंचिदमी पयोदाः
पीत्वा चिराय धरणीमपि तर्पयन्ति ॥ ३५ ॥

शैला निलीना निभृतं यदन्तःशैवालबालाङ्कुरकोटरेषु ।
स एव पाथोधिरगस्त्यहस्तरेखाविशेषान्तर एव तस्थौ ॥ ३६ ॥

देवैर्यद्यपि तक्रवद्विमथितः केदारवद्वानरै-
र्बद्धः सिद्धवदञ्जनात्मजनुषा कुल्यावदुल्लङ्घितः ।
किं चासीच्चुलुकेऽम्बुबिन्दुवदयं द्राक्कुम्भयोनेर्मुने-
र्नापारोऽयमिति प्रथा जलनिधेरासीदथापि श्लथा ॥ ३७ ॥

धिग्धिग्विधेर्विलसितानि कदर्यमेव
यत्केवलं धनमनुक्षणमावृणोति ।
एको हि वारिधिरपेयपयोमयोऽय-
मस्यान्तरेव सरितः परिपूरयन्ति ॥ ३८ ॥

पद्मपालिषु मनाक्कुहेलिके हेलिकेलिपरिपन्थिनी भव ।
मुञ्च शीकरभरेण वारि वा वारिवाहपदवी दवीयसी ॥ ३९ ॥

त्वां दर्शयन्त्युदरमम्बुधिशुक्तयोऽन्त-
रासामवाकिर पयोधर वारिबिन्दून् ।
स्वातीमतीत्य पुनरेष्यति वारिदाना-
माधानसाधनमयं सुचिरेण कालः ॥ ४० ॥

कैः क्लान्तैस्तरुवीरुदादिभिरदः प्रत्याशया न स्थितं
केषां वा न पुनः प्ररोहमकरोदम्भोभिरम्भोधरः ।
एतैरत्र कथं मनोरथमहाभारोऽयमारोपितः
कस्मादेव समादधे किमथ वा संभाव्यते नोन्नते ॥ ४१ ॥

ऊषरे सरिति शाल्मलीवने दावपावकचितेऽपि चन्दने ।
तुल्यमर्पयति वारि वारिदे कीर्तिरस्तु गुणगौरवैर्गतम् ॥ ४२ ॥

धारासारेषु धाराधर इव तरवो नूतनोत्पन्नपर्णाः
पूर्णा नद्योऽपि सद्यो दिशि दिशि निखिलोल्लासभूवासभूमिः ।

भूयो भूयोऽपि काकुं कलयति विवृतत्रोटिरुद्ग्रीविकायं
नायं प्राप्नोति पाथोलवमपकरुणा चातके तात केयम् ॥ ४३ ॥

नीरनिधेरपि नीचान्नाचामति चातकः प्रचुरमम्भः ।
अपि सीकरमुत्कन्धरमुन्नतमम्भोदमर्पयति ॥ ४४ ॥

मा धाव तात चातक वारिमुचां तारतम्येन ।
संमिलितजलदकोटिस्रोटिपुटीपूरमेव तोयं ते ॥ ४५ ॥

प्राप्य प्रावृषमखिलस्तवाधिकारः परोपकारस्य ।
परिहर पयोद चातकयाचनवैमुख्यपातकप्रणयम् ॥ ४६ ॥

अनुरूपमिदं कूप छद्मच्छन्नस्य किं न ते ।
सन्मार्गविभ्रमान्मार्गः पातोऽयं यन्निपातितः ॥ ४७ ॥

आलापं कलकण्ठिका न कुरुते कीरा न धीरस्वरं
व्याहारं कलयन्ति कोमलगिरः कूजन्ति नो बर्हिणः ।
लिम्बा(शंपा)डम्बरदुर्दिने बत वने दूरे द्विरेफध्वनिः
काकाः केवलमेव कांकृतिकृतः कुर्वन्ति कर्णज्वरम् ॥ ४८ ॥

मलिनस्यागुरोरेष नामरूपसमक्रमः ।
तथोपलालितो नायं सुखाय ज्वालिते यथा ॥ ४९ ॥

लोचनं रचय चञ्चलतारं ·········ञ्चलमुदञ्चितहारम् ।
लास्यमन्यदिह पामरि किं चिन्नागरी हरति येन जगन्ति ॥ ५० ॥

अविभ्रमालोकनदुर्भगाणि प्रव्यक्तवक्रस्तनमण्डलानि ।
अङ्गानि रे पामर कामिनीनामपुण्यतारुण्य किमाश्रितानि ॥ ५१ ॥

कति सन्ति नोन्नतिभृतास्तरवस्तदपि त्वमेव गुणकीर्तिवरः ।
न विलादरन्नवरमन्दहरः सहकार कारणमिह भ्रमरः ॥ ५२ ॥

सुखमास पङ्कजनिवासपरः सरसीषु विभ्रमरसी भ्रमधीः ।
समुपैति काननपथाप्यवशः स हि केसर त्वदनुरागरसः ॥ ५३ ॥

यदभञ्जि पङ्कजमखण्डि दलं न ततोऽवसीदति सरोजवनी ।
यदकारि कन्दकवलः करिणा परिणामतस्तदिह दुर्विषहम् ॥ ५४ ॥

पीत्वा मधूनि मधुपाः क्रोडे क्रीडन्तु कमलिन्याः ।
प्राणेशो रविरन्तर्विकसति यस्यावलोकनादस्याः ॥ ५५ ॥

एतावन्तं समयमलयः केसरोत्सङ्गरङ्गी
दृग्भङ्गीनां सततमहरस्त्वं सरःसंचरेषु ।
दैवादस्मिन्मधुप निपतन्कानने केतकीना-
मेतां दीनामनुपमदशां कीलितः कण्टकेषु ॥ ५६ ॥

स्वच्छन्दं सरसीषु सौरभमयं माध्वीकमास्वादय-
न्कल्लोलावलिदोलितेषु कमलक्रोडेषु विक्रीडसि ।
धिग्धूली कवलीकरिष्यसि तले सूचीचयानामले
गूढः स्थास्यसि मूढ यास्यसि यदि त्वं केतकीकाननम् ॥५७॥

धूलीभरो दृगवरोधमहान्धकारः
पत्राणि किंच करपत्रसहोदराणि ।
एतन्न चेत्परिमलत्वमलंकरोषि
स्यात्केन केतकतरोरितरोपयोगः ॥ ५८ ॥

जातिख्यातिभृतां हिताय जगतः स्वल्पापि संपत्सतां
भूयस्योऽपि जनस्य नोपकृतये नीचाश्रयिण्यः श्रियः ।
आमोदाय चिराय चन्दनतरोः क्षोदोऽपि चूर्णीकृतः
सर्वेषामफलः फलाचितमहाशाखोऽपि शाखोटकः ॥ ५९ ॥

त्वमप्यस्तव्यस्तो यदि भवसि जम्बाल यमित-
स्तृणस्तम्बे स्तम्बेरम किमवलम्बे न लभसे ।
विमुञ्च द्राक्चिन्ताभरमथ समस्तान्मदझर-
प्रपातैर्निःशङ्कं किमिति सरिदङ्कं न कुरुषे ॥ ६० ॥

बलं विशालं विपुलं वपुर्वा गर्वाद्वहन्तो विहरन्तु वन्याः ।
किं केसरी स्वं नखरं निधत्ते मत्तेभकुम्भान्तरमन्तरेण ॥ ६१ ॥

वारितवान्मदकरिणां नखरेण खरेण बृंहितं सिंहः ।
कुपितोऽपि तव न फेरव कण्ठरवं केन वारयतु ॥ ६२ ॥

आन्दोलयन्गिरिनिकुञ्जकरञ्जराजी-
नाजीगणः कलभ कंचन पौरुषेण ।
ईषत्समुन्मिलितलोचनकोण एव
कण्ठीरवे किमिति जीवितमुज्जिहासि ॥ ६३ ॥

रे दन्तावलशाव तावकमिदं कुत्रोर्जितं तर्जितं
कीदृग्वा गिरिकन्दरासु नितरां शुण्डारविस्फारणम् ।
भूयाद्वा किमिहाटवीविटपिनां शाखामुखामोटनं
स्याच्चेदेष विशेषतस्त्वयि घृणा कुण्ठो न कण्ठीरवः ॥ ६४ ॥

येषु प्राक्प्रकृतेषु निःसरदसृग्धारानुसारा पत-
न्मुक्ता(पात)निरन्तरालमभवत्कान्तारभूमीतलम् ।
पारीन्द्रस्य खरास्त एव नखराः स्यात्कुत्र तत्पौरुषं
शून्या एव यदुद्भटैः करटिभिर्भूभृत्तटीभूमयः ॥ ६५ ॥

इति श्रीहरिहरसुभाषिते प्रकीर्णकप्रकरणम् ॥ ११ ॥

---

सुभाषितैराहृतेभ्यो हृदयेभ्यो महीभृताम् ।
समाप्नुवन्ति सुधियः स्वयमेव समीहितम् ॥ १ ॥
सुभाषितेन विद्वांसः शूराः संग्रामकर्मणा ।
नीत्यामात्याः प्रजा वित्तैराहरन्ति महीभुजम् ॥ २ ॥
विद्वान्विदापमादाय प्रेमभाजो महीभुजः ।
दर्शयित्वा फलं किंचिदनुज्ञातो निवर्तते ॥ ३ ॥
चिरं विलम्बो विदुषां विदेशेषु विगीयते ।
स्वल्पमप्यल्पकालेन तस्मादन्याहृतं हितम् ॥ ४ ॥
तवौचित्यान्महत्वस्य मास्तु न्यूनो मनोरथः ।
नोन्माद्य खेदयात्मानमप्यलीकमनोरथैः ॥ ५ ॥
नेष्यामि लक्ष्मेवेति प्रतिज्ञाय भ्रमन्भुवम् ।
प्रपेदे पुनरावृत्तिं न महादेवठक्कुरः ॥ ६ ॥

देशान्तरे वयो नीतं गतं लोकान्तरेऽपि वा ।
विभावयन्तु विद्वांसो बन्धूनां किं विशिष्यते ॥ ७ ॥
एकतोऽपरितोषश्चेदन्यमन्यं महीभुजम् ।
निदाघपान्थवच्छायामन्यामन्यामुपाश्रयेत् ॥ ८ ॥
राजानमन्यमन्यं यत्संश्रयन्ते मनीषिणः ।
राज्ञामेवं यशोमोषो नैष दोषो मनीषिणाम् ॥ ९ ॥
द्रष्टव्याः कष्टगम्येऽपि नगरे नगरे नृपाः ।
प्रापकाद्दृष्टसंसृष्टः कश्चित्स्यादेव कस्यचित् ॥ १० ॥
चिरं विनिर्गमो बन्धुवर्गमोदापनोदनः ।
तस्मादपूर्णकामोऽपि समेत्य प्रवसेत्पुनः ॥ ११ ॥
धात्रा वक्रेण धनुषा गुणोत्कर्षेण मार्गणाः ।
अपि लब्धेषु लक्षेषु प्रक्षिप्यन्ते पुनः पुनः ॥ १२ ॥
अर्थानाहरतोऽनर्थाः समायान्ति प्रमादिनः ।
अप्रमत्तस्ततो मार्गो नित्यमेवास्तु वित्तवान् ॥ १३ ॥
हरिणाथो मनाक्पाथोमज्जनादर्जितं चिरात् ।
पथि प्रकटचोरेण हा धिग्धनमहारयत् ॥ १४ ॥
मारयन्ति नराः क्रूरा दूरादाहरतः प्रियम् ।
वाटपाटच्चरैर्नाशं नीतः शंकरठक्कुरः ॥ १५ ॥
अर्थस्योपार्जनं कष्टं कष्टमस्य गृहागमः ।
तस्यागतस्य बन्धुभ्यो विनियोगः सुखावहः ॥ १६ ॥
अर्थस्यानर्थपूर्णस्य कोऽवसीदतु संग्रहे ।
तत्संतुष्टेर्न चेदिष्टैर्हृष्टैः स्यान्नयनोत्सवः ॥ १७ ॥
तानि वित्तानि किं येषां विनियोगो न बन्धुषु ।
निन्द्या विद्यापि सा यस्या विनोदः स्यान्न संसदि ॥ १८ ॥
शरीरभरणेनैव पर्याप्नोति न पौरुषम् ।
परोपयोगशून्यस्य वैशाल्यं शाल्मलेरलम् ॥ १९ ॥

पुण्यरत्नभृतः पाणिः प्रार्थकेन प्रसार्यते ।
धान्यं तदङ्कमायाति माद्यन्मुकुलितः करः ॥ २० ॥
निन्दास्रार्याः कदर्याणामलं वाचां विलम्बनैः ।
यैर्याचितैर्मिषान्म्लाने कालिमास्ये स्वयं धृतः ॥ २१ ॥
आर्थिनो जठरज्वाला दग्धा वाक्कंचिदञ्चति ।
तां च समयतो वित्तं किं निमित्तं न विद्महे ॥ २२ ॥
वर्तुलैरप्यलं वित्तैर्यत्तैर्नोपार्जितं यशः ।
लक्षैर्नवभिरप्यासीत्काशीमिश्रोऽप्यनामकः ॥ २३ ॥
विद्यामध्यापनैर्दानैर्वित्तं नित्यमलं कुरु ।
पुरा कीर्तिर्वटेशादीनाविवेशामुनाध्वना ॥ २४ ॥
सर्वस्याप्यविशिष्टं तद्धनं यन्नोपयुज्यते ।
चौरादिभीत्या धनिनां निशौन्निद्यं विशिष्यते ॥ २५ ॥
धने किमिति कार्कश्यं निधने यद्विमुञ्चति ।
यन्न मुञ्चति पर्यन्ते तदर्जय धनैर्यशः ॥ २६ ॥
भ्रातरापूर्यसे वित्तैर्दीयतां दीयतामिदम् ।
जलेनानपनीतेन पूरिता नौर्निमज्जति ॥ २७ ॥
धारणेनालमेतस्य विपरीतमिदं धनम् ।
धृतं न प्राप्यते भूयस्त्यक्तं भूयोऽप्यवाप्यते ॥ २८ ॥
विनोदः साधुभिः सार्धं प्रतिपादनमर्थिषु ।
विद्याश्रियोर्द्वयोरेतच्चिरोपार्जितयोः फलम् ॥ २९ ॥
विद्या विनोदैर्विदुषां वरीयान्वयसो व्ययः ।
श्रेयस्यो दानभोगाभ्यां श्रियो निःशेषिता अपि ॥ ३० ॥
विनयेन वदान्यत्वं मदास्पर्शेन पौरुषम् ।
पूर्वेण तपसा पुंसां द्वाभ्यां द्वयमलंकृतम् ॥ ३१ ॥
नम्रीभूया भृशं भ्रातर्यद्यस्ति फलगौरवम् ।
चेदनम्रं शिरः शालेरिव तुच्छं फलं तव ॥ ३२ ॥

परोपकृतये जाताः साधवः शालयो यथा ।
शिरश्छेदेऽपि नोज्झन्ति फलसंपत्तिनम्रताम् ॥ ३३ ॥
नीचाशयानां संपत्तिः प्रतिवेशिविपत्तये ।
निपाताय तटस्थानां सद्यो नद्योऽम्बुपूरिताः ॥ ३४ ॥
धनाभिजनविद्याभिर्यद्यायातो न दुर्मदः ।
गोविन्दानुगृहीतोऽयमिति ह्रीतोऽवधार्यताम् ॥ ३५ ॥
मदोन्मादविहीनेन सततं प्रियवादिना ।
क्रीतमेतत्सुकृतिना जगदेवाकपर्दकम् ॥ ३६ ॥
अस्मिन्परस्परद्वेषपरुषे पुरुषायुषम् ।
केवलं मधुरा वाणी ददात्यानीय सौहृदम् ॥ ३७ ॥
ये सतामवमन्तारस्ते गन्तारः पराभवम् ।
स्वाराज्यान्नहुषो विप्रावलेपाद्विनिपातितः ॥ ३८ ॥
आचरन्बहुभिर्वैरमल्पकैरपि नश्यति ।
जनैः प्रत्यायितोऽमात्यं प्रेतमित्यत्यजन्नृपः ॥ ३९ ॥
विरोधेनाधमस्यापि न महानपि मोदते ।
अपि दासीकृतेनासीद्वनवासी रघूद्वहः ॥ ४० ॥
परिष्वङ्गोऽपकर्षाय हीनजातिषु जायते ।
रामस्यापि कपिः स्कन्धमारुरोहादृतः पुरा ॥ ४१ ॥
जन्म तन्मन्महे धन्यं संसर्गो यत्र सत्तमैः ।
सौभाग्यं पश्य निम्बस्य चन्दनाचलजन्मनः ॥ ४२ ॥
एको गोत्रे पुमान्प्रोक्तः प्राक्तनैः स्वकुटुम्बभृत् ।
एकोऽप्यनेकः पुरुषः परेषां भरणक्षमः ॥ ४३ ॥
को निजः कः परो लोके शोकेनाद्यो विशिष्यते ।
निजः स एवोपकृते यशो यत्रावशिष्यते ॥ ४४ ॥
व्ययमायक्रमेणैव कुर्वन्त्यायतिदर्शिनः ।
यावदास्तरणं पादप्रसारणमिति स्थितिः ॥ ४५ ॥

क्षयाय जायते पुंसामायादत्यधिको व्ययः ।
मिताशी योषितां रन्ता किं तात सुखमेधते ॥ ४६ ॥
अविचारेण यत्कर्म कृतं तन्मर्मकृन्तनम् ।
प्रसह्य सीताहरणादतीता रावणश्रियः ॥ ४७ ॥
संपद्यमानमालोक्य श्रेयः सद्यः समाचरेत् ।
दहत्यामरणं कर्म विलम्बेन विनाशितम् ॥ ४८ ॥
कष्टं कर्मेति दुर्मेधाः कर्तव्याद्विनिवर्तते ।
न साहसमनारभ्य श्रेयः समुपलभ्यते ॥ ४९ ॥
किं वा बहुभिराख्यातैस्तत्कुर्वीथाश्चिरं यथा ।
त्वां गायति सतामग्रे यशोभिरवशो जनः ॥ ५० ॥
एकं तु लोकवेदेभ्यः सारमाकृष्य कथ्यते ।
प्राणात्ययेऽपि न त्याज्यो न्याय्यो धर्मश्लथः पथः ॥ ५१ ॥
अत्यल्पं जीवितं पापान्यापातमधुराण्यलम् ।
तदाचर चिरास्तेयपरलोकावलोकनम् ॥ ५२ ॥
अवधारय धर्मेषु प्रधानमवधानतः ।
निर्भरानन्दकन्दाय गोविन्दाय मनोऽर्पय ॥ ५३ ॥
कुर्युः के वा न सेवाभिर्देवास्ते वाञ्छितां श्रियम् ।
वाञ्छातीता चिरस्फीता प्रीतात्पीताम्बरादियम् ॥ ५४ ॥
आकर्ण्य वाणीः पौराणीर्मयैतदवधारितम् ।
तिष्ठन्तु देवदेव्योऽपि सेव्यो नारायणः परः ॥ ५५ ॥
स्मरत्यहह किं कामी यामीमपि न यातनाम् ।
यत्र ध्यायति गोविन्दमरविन्दविलोचनम् ॥ ५६ ॥
नाम नामरणं मुञ्च नामिनोऽप्यधिकं हरेः ।
यदेतेनानुरक्तेन तत्तेनोक्तेन लभ्यते ॥ ५७ ॥
पश्यामि त्वामरे मूढ गूढमज्ञानवारिधौ ।
स्मर संसारसंतारकारणं चरणं हरेः ॥ ५८ ॥

कामात्क्लाम्यति कारीतिर्नारीति नरकाभिधा ।
मलमज्जमयी मांसस्तुगी किं न विगीयते (?) ॥ ५९ ॥
दुःखनित्यानि वित्तानि त्वं किमासाद्य माद्यसि ।
ये भोक्तुमेतानीच्छन्ति तानेतान्येव भुञ्जते ॥ ६० ॥
किं ते पुत्रेण मित्रेण धनेनाभिजनेन वा ।
सर्वं शोकाय लोकानामाकाशनगरायितम् ॥ ६१ ॥
अलं वा बहुवादेन यत्र यत्रानुरज्यसे ।
तत्र तत्रैव ते दुःखदावपावकपङ्क्तयः ॥ ६२ ॥
साम्यं कुरु सुते शत्रौ कीटकोटीशयोरपि ।
समो जीवस्तमोरूपं न भावमनुधावति ॥ ६३ ॥
भोगारीणां न शक्तोऽसि यादवारिनिवारणे ।
अनौत्सुक्यमयं वर्म मनोवर्मणि धारय ॥ ६४ ॥
अनाविलं फलं भुङ्क्ते विषयाणामनुत्सुकः ।
उत्सुको लब्धरोकेण तत्र शोकेन शीर्यते ॥ ६५ ॥
मा शुचो वार्शुचो वृष्टिर्लोकसृष्टिश्च वेधसः ।
उत्पद्यते विनाशाय क्षणरक्षणलक्षणः ॥ ६६ ॥
दुःखभारापहाराय नारायणमयं जगत् ।
आत्मनश्चिन्तया भेदाद्भेदातीतो भविष्यसि ॥ ६७ ॥
क्वाप्याकारे हरेः सम्यङ्नियम्य सुचिरं मनः ।
धियं निर्विषयं नीत्वा प्रकाशाकाशमाविश ॥ ६८ ॥
प्रक्षिप्य पक्षिवद्वन्यं खच्छीयाकाशमाश्रय ।
पदादास्तामधस्ताच्चे मेरोरपि शिरो गतः ॥ ६९ ॥
समाधाय धियां धारां निराकारां चिदम्बरे ।
आत्मानमाप्नुहि भ्रातरासमोक्षमधोक्षजम् ॥ ७० ॥
लक्ष्मीराघवयोः सूनोरन्यूनोऽयं गिरां गुणैः ।
सुभाषितानां संक्षेपः प्रेक्षावद्भिः परीक्ष्यताम् ॥ ७१ ॥

वाग्देवीकरपद्मपञ्जरपठत्कीरायितानां पुरो
गण्यन्ते कवयः क्व वाङ्मयपुरप्राकारकाकायिताः ।
ब्रह्मास्वादसुखावखातमनसां गोष्ठीषु सांसारिकाः
स्वर्गोत्सङ्गनिषादिनोऽपि कुररीपाका वराका इव ॥ ७२ ॥

इति हरिहरसुभाषिते [illegible]मार्थप्रकरणम् ॥ १२ ॥

समाप्तश्चायं ग्रन्थः ॥

---

